## ॥ * ॥ अथ सटीकः संकेतनिधिः प्रारभ्यते ॥ * ॥

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

योऽभून्नरवरसेव्यः श्रीमत्साहिबदयालुरितिनाम्ना ॥ ख्यातो राजोपपदः प्रभुप्रभूतप्रभांसभाप्रभृतः ॥ १ ॥
वंशीधरोऽस्य सनयस्तनयः प्रसिद्धो वंशीधरोऽजनि यथा वसुदेवतोऽत्र ॥
अस्यात्मजो गुणिगणोडुविधुर्म्महाचन्द्राख्य-प्रजेशपरिसेवितपादपीठः ॥ २ ॥
तेन लोकोपकाराय संकेतनिधिनामकः ॥ मुद्रणाय मुम्बैपुर्य्यां सञ्थाख्यः सन्मुदे भृतः ॥ ३ ॥

---

१ प्रभु जो लाट गवरनर्जनरल उसने बडी जो प्रभायुक्त सभा कौंसिल उसमें जो मेंबर किया गया। (Member of the Legislative Council of India.)

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

ॐ श्रीगणेशायनमः ॥ ॐ श्रीः ॥ स्वस्तिस्तात् ॥ श्रीकृष्णत्वच्चरणनलिनंवन्द्यमब्जोद्भवाद्यैःसद्यःस्मृत्वासकृदपिबुधास्सन्तियुक्ताश्चमु
क्ताः ॥ मुक्तादीनांश्रुतिरुचिभृतांयत्रयुक्तातिमुक्तश्रीर्नोचित्रंजयतितदभीष्टार्थभृद्भक्तिभाजाम् ॥ १ ॥ श्रीहेरम्बपदद्वन्द्वमालम्ब्याहंयथा
मति ॥ गुरुभिःकृतसङ्केतनिधिंव्याख्यातुमुत्सुकः ॥२॥ अथश्रीरामदयालुसञ्ज्ञया प्रसिद्धोदैवज्ञाचार्य्यःखेटप्रकाशं मुहूर्त्ताम्बुधिं च नि
र्माय चिकीर्षितस्य ग्रन्थस्य निष्प्रत्यूहपरिसमाप्तिप्रचयगमनादिसिद्धियेऽध्ययनाध्यापनादियोग्यतासम्पत्तयेच सदाचारपरम्परापरिप्रा
तविधयोभयेषामभीप्सितार्थसिद्ध्यर्थम्भगवन्तमेवाभ्यर्थयन् शक्तिविशिष्टश्रीपतिस्मरणलक्षणं मङ्गलं शालिन्याचरति श्रीश्रीपत्योरि

ॐ श्रीः ॥ श्रीश्रीपत्योस्सम्प्रयोगोऽभिजातोविश्वश्रेयस्संपदेसम्मदेद्धः ॥

ति श्रयति सर्वं जगदेनामितिश्रीः साचश्रीपतिश्चतयोः परमेश्वरीपरमेश्वरयोः मायाप्रयुक्तसृष्ट्यादिजननस्वरूपयोग्यतावच्छेदकरूप
विशिष्टयोर्यः सम्प्रयोगः अन्योन्यस्मिन् प्रेमलक्षणः सकलकार्योपयोगी नवसङ्गमात्मकः सम्बन्धः ईक्षणसङ्कल्पप्रयत्नादिलक्षणो वा ए
तेनैतादृशभगवत्स्वरूपध्यातॄणामेतद्ग्रन्थाध्येतॄणां च वर्णाश्रमोचितधर्म्मनिष्पत्तिपूर्वकोत्तमपदावाप्त्यादिकरूपस्यधनसन्तानसुखप्रतिष्ठै
श्वर्य्यादिरूपस्य च फलस्यावश्यम्भावः सूचितः अत्रहेतुं प्रकटयन्नस्य प्रकृतानुकूलं विशेषणमाह अभिजातइति अभिजातः न्याय्यः

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

सं०नि० शुद्धसत्त्वप्रधानमायाप्रयुक्तः नत्वविद्याप्रयुक्तइत्यर्थः अभिजातः कुलीनेस्थाण्याय्यपण्डितयोस्त्रिष्वितिमेदिनी ॥ तेनरागद्वेषादि सटी०
॥ १ ॥ दोषैरदूषितमायाकार्यत्वेन तस्यानुकूलभक्तादीनां तादृशाभीप्सितार्थसम्पत्तिप्रयोजकतायां सन्देहाभाव उक्तः एतदेव मुखतः प्रयो सं० १
जनोक्त्या स्पष्टयति विश्वेति विश्वेषां ध्यातृध्येत्रादीनां श्रेयःसम्पतिश्चतुर्विधपुरुषार्थसंसिद्धिः तस्यै यद्वा विश्वस्य सर्वस्य जगतः सृ
ष्ट्यादिजननयोग्यतावच्छेदकज्ञानतपऐश्वर्य्यादिरूपा सम्पत् तस्यै अत्रैतत्सामर्थ्यप्रयोजकहेतुगर्भविशेषणमाह सम्मदेद्धइतिसम्मदे
न प्रमोदेन धातायथापूर्वमकल्पयदितिश्रवणात् पूर्वपूर्वकल्पीयानादिमायासंबंधप्रयुक्ततद्वृत्त्याद्यात्मकेनइद्धः दीप्तः प्रवृद्धः कार्योत्पा

दिश्यादिष्टंस्फारमारादपारम्पारम्पर्य्यप्रीतिभाजां जनानाम् ॥ १ ॥

दनक्षमतां नीत इतियावत् नचैवंभगवतोपिसोकामयतेत्यादिश्रुतिशतेन कामाद्यासक्तत्वप्रतीतेरस्मदाद्यविशेषापत्तिरितिवाच्यं ली
लामात्रेण जगत्सिसृक्षादिप्रयुक्तप्रवृत्तिप्रतीतेः पूर्णकामस्यास्मदादिवदासक्त्यसंभवात् लोकवत्तुलीलाकैवल्यमित्यधिकरणेभगवता
भाष्यकृतैव तदर्थस्य स्पष्टीकृतत्वात् नन्वेवमपि तदैक्षत । सोकामयत । तन्मनोऽकुरुत । तस्मादेतद्ब्रह्मनामरूपमन्नंचजायते इत्या
दिश्रुतिभ्यः निमित्तं शुद्धसत्त्वांतामुच्यतेब्रह्मतदिरेत्यादिवृद्धवचनशतैश्च शुद्धस्यापिवासुदेवस्य परमात्मनएवमायामुपादायतच्छ ॥ १ ॥
CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri
ब्दवाच्यतया शबलतां प्राप्तस्य आत्मनआकाशःसंभूतइत्यादिश्रुत्या सृष्ट्यादिहेतुत्वोक्तेः कथं संप्रयोगस्यैव हेतुत्वमुच्यते इति चे

त्र तद्धतोरेव तदस्तुकिंतेनेत्यादिन्यायेन संप्रयोगाभावे ब्रह्मणोऽकारणत्वात्तस्मिन् सत्येव तस्य जगज्जन्मादिहेतुत्वसंभवात्संप्रयोगस्यै
व तत्प्रयोजकत्वोपपत्तेः अन्यथा संप्रयोगाभावेशबलत्वस्याप्यसंभवेनश्रुत्यभिमतशबलकारणकत्वानुपपत्त्यापत्तेः सविशेषणेहिविधि
निषेधौसतिविशेष्ये बाधे विशेषणमुपसंक्रामतइतिन्यायेनापि विशेष्यस्यशुद्धस्यपरमात्मनो जगत्कारणत्वादेर्बाधितत्वेनविशेषणीभूत
संप्रयोगस्य प्रयोजकतायामविरोधात् एवं जगदुत्पत्त्यादिप्रयोजकत्वेन संप्रयोगमुपवर्ण्यैदानीं ततएव सतामभीप्सितार्थसिद्धिंप्रार्थयते
दिश्यादिति पारम्पर्ये परम्परया परिप्राप्ते शास्त्राचार्यसम्प्रदायसिद्धे वस्तुन्येवप्रीतिमुत्साहंभजन्ते तेषां सतां पुरुषाणामिष्टं धर्मादिरू
पमर्थं दिश्यात् अतिसर्जनस्यातिदानार्थकत्वेन सर्वथातिशयेन दद्यात् ननु जन्मांतरीणाभीप्सितार्थावाप्त्यादौ तत्प्रयोजकादौ च चि
कित्सादेः संभवेन विशेषतः कार्यकारणभावाद्यनिर्णयात्ताहृशध्यानाध्ययनादौ शिष्टानामपि कथं निष्कम्पा प्रवृत्तिःस्यादतआह आरा
दिति अस्मिन्नेवजन्मनीत्यर्थः ध्यानादींष्टसिद्धचादेर्दोषाद्यास्पदत्वशंकायांपुनरपिसाऽतआह स्फारमिति दोषाद्यास्पदत्वशंका
कलंकविधुरं यद्वा स्फारमितिक्रियाविशेषणम् अनन्यचिंतनाव्यभिचारियथास्यात्तथादेशनमित्यर्थः अनन्याश्चिन्तयंतोमामनन्यचेता
इत्यादिस्मृतिभ्य उपासनादिमार्गाज्ञानेप्यनन्यचिन्तनमात्रेणैवाभिलषितार्थसिद्धेःसंभवात् अतएव अपारं हेतुभिरपरिच्छेद्यमित्यर्थः
अत्र स्वरूपतएव मङ्गलार्थस्य श्रीशब्दस्य गणलिप्यादिदोषनिरासार्थमप्यादौ प्रयोगः तदुक्तं देवतावाचकाःशब्दायेचभद्रादिवाचकाः
ते सर्वे नक्कचिन्निंद्या लिपितो गणतोपिवेति श्रीश्रीपत्योरिति॥शालिनीछंदः॥शालिन्युक्ता म्तौ तगौ गोब्धिलोकैरितितल्लक्षणात् ॥ १ ॥

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

एवं प्रथमश्लोकेन वस्तुस्मरणात्मकमाशीर्वादात्मकं च मंगलं निबध्यग्रन्थकरणे प्रवृत्तौ व्याजेन प्रयोजनं निर्दिशति स्वभ्रातृजेति स्वभ्रातृजे ज्येष्ठसहोदरात्मजे श्रीघासीरामनामके या प्रीतिः आज्ञावशवर्त्तित्वानुकूलाचरणादिना समुद्भूता हर्षात्मिकाचित्त वृत्तिः तया वशंवदः अधीनीकृतः तमुद्दिश्य ज्योतिर्वित्त्वादेशकर्तृत्वादिनिर्वाहकोपदेशेच्छया प्रयुक्तः प्रेरितइतियावत् यस्तेन श्रीरामदयालुनाम्ना रणजित्सिंहादिमहाराजादृतचरणारविंदेन ज्योतिर्विदा विधितोऽवगतसूर्यसिद्धान्तादिसकलसिद्धान्तेन सर्वत्र प्रसिद्धेन स्वभ्रातृजमुद्दिश्य लोकोपकारचिकीर्षया प्रवृत्तेन प्रश्नोद्भवादौ प्रश्नोदौ जन्मलग्नादिद्वादशभावफलनिरूपणादौ च

स्वभ्रातृजप्रीतिवशंवदेनज्योतिर्व्विदारामदयालुनाम्ना ॥
प्रश्नोद्भवादावुपयोगिकिञ्चिन्निबध्यतेपूर्व्वकविप्रणीतम् ॥ २ ॥

आदिपदादब्दलग्नाधानलग्नादावपि किंचित् गुरुसम्प्रदायावगमसिद्धम् उपयोगिनिर्विचिकित्सप्रश्नादिप्रतिवाक्यादिप्रदानफलादेशनादिशक्तिप्रयोजकं विलक्षणचमत्कारकारकतया प्रत्यक्षतोऽनुभूयमानफलप्रतिपादनादौ सहायकरं उपपत्त्यविरुद्धं च सर्वसत्सङ्केतसिद्धमेव निबध्यते तदर्थकपदवाक्यादिघटितेन नानाविधच्छन्दोरचनया रचितेन निबंधेन प्रकटीक्रियते ननु स्वकल्पितपदार्थज्ञानजनके ग्रन्थे शिष्टानां प्रवृत्तिरसम्भाविन्यतआह पूर्वकवीति पूर्वे ये कवय आचार्यमहर्षिप्रणीतमूलशास्त्रयथार्थमर्मज्ञाः भास्करकेशवार्यभट्टानंतदैवज्ञप्रभृतयस्तत्प्रणीताविरुद्धमेव मया निबध्यते अतो नाऽनादरणीयोयंनिबंधइत्यर्थः ॥ २ ॥



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

तत्र तावत्प्रश्नजन्मवर्षादिफलप्रतिपादनोपयोगिलग्नतदवयवादिज्ञानस्येष्टकालज्ञानाधीनत्वेन तदर्थं सुगममेव प्रसिद्धं प्रकारं दर्शयितुम्प्रतिजानीते तत्रेष्टकालेति तत्रभाविभूतादिफलजिज्ञासया प्रवृत्तप्रच्छकादिपृच्छोद्भवाद्यव्यवहितोत्तरक्षणएव इष्टकालाज्ञाने राश्यंशादेरज्ञातत्वेन विचारादौ प्रवृत्त्यसंभवात् तदर्थम् आदरात् नतु हेलया आर्यभट्टोक्तकृत्यं तत्त्ववित् प्रकृतशास्त्रमर्मवित् तत्रोहापोहकुशलइत्यर्थः विदधीत कुर्यात् किंतत्कृत्यमित्याकांक्षायां सार्द्धश्लोकेन तदाह परद्युमानमिति तत्तद्देशे यतो घट्यादिदिनमा

तत्रेष्टकालावगमार्थमादरादार्योक्तकृत्यं विदधीत तत्त्ववित् ॥
परद्युमानन्दिनमानवर्जितंनगघ्नमक्षाप्तमहस्सु मध्यभा ॥ ३ ॥

नादधिकं दिनमानं न भवति तद्द्युमानं परमुच्यते तच्च रवेः सायनकर्कप्रवेशावच्छिन्नदिनएव तत् इष्टदिनमानेन वर्जितं रहितं कृत्वाऽवशिष्टं तु नगघ्नं सप्तगुणं कार्यं पुनः अक्षातम् अक्षैःपंचभिर्भक्तं परस्वद्युमानयोरंतरस्य सप्तगुणितस्यपंचमोंश इति यावत् सा अहस्सु तत्तदिष्टदिनेषु तत्तद्देशएव मध्यभा मध्याह्नसमये द्वादशांगुलशंकोश्छाया भवतीत्यर्थः ॥ ३ ॥

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

सं॰नि॰ तत्रशेषकृत्यमाह द्युमध्यभोनेति तत्र निजेष्टभा तच्छंकोरेव इष्टदिने इष्टकाले यांगुलाद्यात्मिकाच्छाया सा दशभिर्युक्ता का सटी॰
॥ ३ ॥ र्या ततः पूर्वप्रकारेण सिद्धया मध्याह्नच्छायया ऊना रहिता च कार्या एवं भाजकं निष्पाद्य तत्रभाज्याकांक्षायामाह शराहते सं॰ १
ति शरैः पंचभिराहता गुणिता याऽहर्मितिरिष्टदिनमानं घट्यांद्यात्मकं तदेव पंचगुणं भाज्यं भवति तत् तया भाजकभू
तया उद्धरेत् विभजेत् तत्र लब्धं यद् घट्यादि तत् मध्याह्नात्पूर्वं जन्मादौ दिनस्य गतं सूर्योदयमारभ्य ज्ञेयं मध्याह्नात्परत
श्चेद्दिनस्य गम्यं शे ज्ञेयमित्यर्थः अत्रोदाहरणम् अमृतसरसि नगरे परं दिनमानं ३५ । २० स्वेष्टदिनमानेन ३४ । २० वर्जितं १

द्युमध्यभोनादशयुङ्निजेष्टभाशराहताहर्मितिमुद्धरेत्तया ॥

नगघ्नं ७ पंचभक्तं १ । २४ इदमिष्टदिने मध्याह्नसमये शंकुच्छायाया अंगुलाद्यं मानं जातं पुनर्निजेष्टसमये शंकुच्छाया २० दशां
गुलयुता ३० पूर्वसिद्धेनअंगुलाद्यात्मकमध्याह्नकालीनच्छायामानेन १ । २४ रहिता जाता २८ ।३६ अयमेव भाजकः अनेन शराह
तार्हर्मितिः १७१ ४० भक्ता लब्धघट्यः ६ ५० मध्याह्नादर्वाक्चेदेता दिनगतघट्यो ज्ञेयाः मध्याह्नादनंतरंचेद्दिनशेषघट्यः अत्रो ॥ ३ ॥
CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri
पपत्तिरपि त्रिंशद्घट्यात्मकदिनमानं तत्तद्देशीयपरमदिनमानयोरंतरं याम्योत्तरवृत्ते नतघट्यः तच्चद्विगुणीकृतचरपलयोगएव यत्र

चरोपचयादिस्तत्रैव तदंतरोपचयादिः यत्र देशे सप्तांगुला पलभास्ति तत्रानुपातस्तद्यथा यदिपंचघटीमिततद्दिनमानांतरे
विषुवद्दिवसे सप्तांगुला पलभा तदा परस्वद्युमनांतरेकिमिति जातामध्याह्नच्छाया तथाचेच्छायाः पलभागुणकः विषुवद्दिनपरदिन
मानयोरंतरंभाजकमित्युपपन्नं नगघ्नमक्षात्तमिति अत्रक्वचित्स्वल्पांतरत्वेपि नदोषः तदुक्तं स्वल्पांतरत्वादबहूपयोगात्प्रसिद्धभावाच्च
बहुप्रयासात् ॥ ग्रंथस्य तज्ज्ञैर्गुरुताभयेन यस्त्यज्यतेर्थोनसदूषणायेति अथदशयुगित्यादेरुपपत्तिःयथा यदि यत्र मध्याह्नच्छायास

क्रमान्मताः पूर्वपरद्युखण्डयोर्द्वयोरवाप्तागतगम्यनाडिकाः ॥ ४ ॥

मच्छायया दिनार्द्धमिष्टं लभ्यते तदाद्युमध्यभोनेष्टच्छायाधिकच्छायया किमिति गोलद्वये विषुवद्दिने छायांतरयोर्बाहुल्यात् तन्म
ध्यएवालिकुंभार्कमध्याह्नच्छायालाघवाद्दशमिताग्रहीता तत्रैव तस्याः संभवात् तथा कृते स्वल्पांतरं तत्रानुपातः यदि दशमित
च्छायया तद्दिनार्द्धसममिष्टं तदा दशयुक्तद्युमध्यभोनेष्टच्छायया किमिति व्यस्तं त्रैराशिकं तत्र दशयुक्तद्युमध्यभोनेष्टच्छाया
हरः पूर्वदिनार्द्धस्य दशगुणकइदानीमहमितेःपंचगुणक इत्युपपन्नं दशयुक्तत्वमिष्टभाया अहर्मितेः पंचगुणत्वं चेति ॥ ४ ॥

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

सं०नि०

॥ ४ ॥

सटी०

सं० १

अत्रैव प्रकारांतरं प्राचीनसंमतं पद्येनोपनिबध्नाति निजाष्टयंशहीनमिति परस्वद्युमानांतरं परमदिनस्वेष्टदिनमानयोरंतरं स्वकीय षोडशांशरहितं कार्यं यत् एवं कृते सिद्धं तस्ययोऽष्टमांशस्तेन हीनो रहितो यः एकांकः अयं चांगुलात्मकत्वेनाभिमतः दिनावय वात्मकस्याप्यस्य योगवियोगादौ साजात्यस्यैवापेक्षणीयत्वेन तदनुरोधाथ तथात्वमवगंतव्यमिति तथाविधमेकमंकं भजति संधुन क्तीति तदष्टांशहीनैकभाक् तेन तादृशैकविशिष्टेनेत्यर्थः स्वभाभानुभागेन इष्टकालिकशंकुच्छायाद्वादशांशेनैतादृशैकयुक्तेन दि नार्द्धात इष्टदिनार्द्धमानात् लब्धाः प्राप्ताः तेन भागे दत्ते सतीतिशेषः गतैष्याः प्राग्वत स्वस्वघस्रार्द्धघटचो ज्ञेयाः पूर्वापरकपाल

निजाष्टयंशहीनं परस्वद्युमानान्तरं यत्तदष्टांशहीनैकभाजा ॥
स्वभाभानुभागेनलब्धादिनार्द्धाद्गतैष्याःक्रमाद्वा स्वघस्रार्द्धघटयः ॥ ५ ॥

योर्गता एष्या भोग्याश्च क्रमादेव स्युः अत्रोदाहरणं परमदिनं ३९ । २० स्वेष्टदिनं ३४ । २० तयोरंतरम् १ । ० अस्याष्टयंशः ०।३। ४९ अनेन हीनं परस्वद्युमानांतरम् ० । ५६ । १९ अस्य पुनरष्टमांशः ० । ७ । २ अनेन हीन एकः ० । ५२ । ५८ अनेनस्वभाया स्तत्कालीनद्वादशांगुलशंकुच्छायायाः २० भानुभागो १ । ४० युक्तः २ । ३२ । ५८ जातोयं भाजकः अनेन दिनार्द्धमाने १७। १० भक्ते लब्धं घटयाद्यं ६।४३ पूर्ववदेवपूर्वापरकपालयोर्गतमेष्यं च क्रमात् अत्रोपपत्तिःद्वादशाक्षभादेशे भुजकोटयोस्तुल्यत्वात् लंब ज्याक्षज्ययोरपि तुल्यत्वमेव तत्रपरमदिनम ३८। ३० अत्रानुपातः यदि पलभा तुल्यच्छायया दिनार्द्धं १५ मानं लभ्यते तदेष्टच्छाय

॥ ४ ॥

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

या किमिति इदमपि ॥ व्यस्तमेव तत्रेष्टच्छायां ८। ५२ गुलात्मिकाकल्पिता तथाच पलभा १२ गुणः इष्टच्छाया ८। ५२ हरः तत्र लब्धं २०। १६ परमदिनार्द्धमानंच १९। १५ अनयोरंतरमेक १ मेव तत्र गुणहरयोर्द्वादशभिरपवर्त्तने गुणस्थाने एकं १। हरस्थानेच्छायाद्वादशांशः अतउक्तं स्वभाभानुभागेनेति पुनर्यदि विषुवद्दिनपरमदिनांतरेण ८। ३० परदिनार्द्धमानपूर्वानुपात लब्धयोरेकमन्तरमृणं लभ्यते तदेष्टपरदिनान्तरेण किमिति तत्र इष्टपरदिनान्तरस्य गुणः १ हरः ८। ३० अत्रहरे यात्रिंशत्सएवा ष्टानां षोडशांशः अतउक्तं निजाष्टचंशहीनेति। येष्टौ ते स्पष्टाः अतउक्तं तदष्टांशहीनैकेत्यादि तत्रेच्छाऋणत्वाद्धीनमित्युक्तं तत्र

भानूदयद्वितयमध्यगतुल्यकाला यावक्रियाःखखनृपाक्षिमितासुतुल्याः ॥
तासांखषड्लवइहैकघटीहरिद्भिर्गुर्व्वक्षरैरसुरथार्यसुभिर्विनाडी ॥ ६ ॥

गतगम्यत्वादि पूर्ववदेवेति ॥ ५ ॥ तत्र पूर्वप्रदर्शितप्रकाराभ्यामुपपन्नं यदिष्टसमयमानं तत्परस्परमपि सांतरमेव भाति तत्तद्देशादिभे देतु सान्तरताप्राचुर्य्यमेव यतोऽनयोःप्रकारयोर्नगादिनियतांकघटितत्वात दिनादिज्ञानप्रयोजकक्रान्तिवृत्तादीनां तत्तद्देशादौ वक्र त्वावक्रत्वादिना वैषम्यात् यथा यत्रदेशे क्रान्तिवृत्तादेर्वक्रत्वं तत्र शीघ्रमेवराश्यादितदवयवोदयः यत्रचावक्रत्वादि तत्रतुविलंबेनोदय इति सिद्धान्तविदां धीमतां स्पष्टमेवभाति तस्मात्सिद्धान्तसिद्धप्रक्रिययाविनैवगणितादिप्रयासं नियतश्वासादिव्यापारद्वारा तदिष्ट कालावगमायाह भानूदयेत्यादि एकभानूदयप्रथमक्षणमारभ्य तदव्यवहितोत्तरद्वितीयभानूदयावच्छेदकप्रथमक्षणपर्यंतं याव

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

स्तन्मध्यवर्तीकालः किंचिदधिकषष्टिदण्डात्मकत्वेनाभिमतः सचखखनृपाक्षिसंख्याकासुभिरेवपरिच्छिद्यते एकस्मात्सूर्योदया
दग्रिमः सूर्योदयः सर्वत्रसाधिकषट्शत्युत्तरैकविंशतिसहस्रसंख्याकैरेवासुभिर्भवतीत्यर्थः तत्रैकस्मिन् प्राणे प्राणनादिव्यापारात्मिका
एकाक्रियानियताचेत्तदा तादृश्यः क्रियाः सर्वा अपि सूर्योदयद्वयमध्ये प्राणैः परिच्छिन्नाः प्राणपरिमिता एव भवन्ति तथाच तादृ
शक्रियाभिरेवानायासेन निरन्तरं बुद्धिमद्भिर्दिनगतादिज्ञानं संपादनीयं अथ घट्यादीष्टकालजिज्ञासायां प्राणपरिस्पन्दादिज्ञान
सम्पादनं तदनिवर्त्तकत्वादसंगतमतआह तासामिति तत्तत्प्राणावच्छिन्नतत्तत्क्रियाणां संख्यायाः षष्टितमोभागएवैकाघटी भवती

निशीष्टवेलावगमार्थमर्कभात् क्रमाल्लयोद्गदयभं खमध्यभम् ॥
भुवादिनैश्चोनमिभैस्तमीदलाहतंनगाप्तं निशियातनाडिकाः ॥ ७ ॥

त्यर्थः एवंच षष्ट्युत्तरशतत्रयमितैरसुभिस्तदवच्छिन्नतावत्क्रियाभिर्वा एकाघटिका ज्ञेयेति ननु प्राणानां प्रतिपुरुषमनियतत्वा
त्तद्घटितघट्यादिकालस्याप्यनियतत्वेन कथमेतद्रीतिसिद्धकालज्ञानं निरंतरमितिशंकायामाह हरिद्भिरिति हरिद्भिर्दशभिः आ
शाश्च हरितश्च ता इति कोशात् हरित्पदबोध्यदिशां दशसंख्याकत्वात् तैर्गुर्व्वक्षरैरेकः प्राणः तथाच दशगुर्व्वक्षरोच्चारणकालेनएक
स्य प्राणस्योदयो भवतीत्यर्थः तथाऽयमसुभिः षड्भिरसुभिः प्राणैरेकाविनाडीपलं भवति पलषष्ट्या चैकाघटिकेति सिद्धं नियतव्यापा ॥ ५ ॥
रेण निरंतरकालज्ञानमिति ॥ ६ ॥ अधुना रात्रावपीष्टकालज्ञानायाह निशीति निशि रात्रौ इष्टवेलावगमार्थं प्रश्नजन्माद्यवच्छेदककाल

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

ज्ञानार्थं अर्कभात् यन्नक्षत्रेवर्त्तमानकाले सूर्यो वर्त्तते तस्मात् क्रमेण लयोडु अस्तभं अस्तक्षितिजसंबद्धं नक्षत्रं यत्एवं ततएव उदयभं उदयक्षितिजसंबद्धं एवं खमध्यभं स्वशिरोदेशावच्छिन्नक्रांतिवृत्तप्रदेशावच्छेदेन वर्त्तमानंनक्षत्रं भुवेत्यादितथाच सूर्यनक्षत्रादस्तनक्षत्रं यत्संख्यं तदेकोनं उदयनक्षत्रं पंचदशोनं खमध्यभं इभैरष्टभिरूनं कार्यंएवमेकस्मिन्नेवकाले त्रिभिः प्रकारैरेकाकारांकसंपत्तिः पुनर्यद वशिष्टं तत् तमीदलेन रात्रिमानदलेन आहतं गुणितं नगाप्तं सप्तभिरुद्धृतं निशि रात्रौ गता नाडिका घट्यो भवन्तीत्यर्थः ॥ ७ ॥ नक्षत्रध्रुवस्पष्टादिज्ञानमनुसृत्य भाज्यभाजकादिकल्पनया रात्रिगतकालादि ज्ञानं साधयति स्फुटार्कहीनादिति अथवा प्रकारांत

स्फुटार्कहीनात् स्वशिरोगभध्रुवाल्लवीकृतात् खाङ्कलवो नतोथवा ॥
रसैरवाप्ताश्च कला निशो गता मदुक्ततन्त्रादपि भध्रुवान् स्मरेत् ॥ ८ ॥

रेण ज्योतिर्विदा स्वकीयशिरोदेशगतनक्षत्रध्रुवकात् राश्यंशकलाविकलात्मकात् ध्रुवस्पष्टात् तत्कालीनराश्यादिस्फुटसूर्येण हीनात् तादृशध्रुवस्योदयास्तकालीनत्वसिद्धयर्थं राश्यादिध्रुवस्पष्टाद्राश्यादिसूर्यस्पष्टः शोध्यइत्यर्थः अवशिष्टस्य सर्वस्यांशाः कार्याः नवत्यधिकाश्चेन्नवतिरहिताः कार्याः एवंभाज्यांके सिद्धे भाजकांकमाह रसैरिति तत्र रसैः षड्भिर्भागे दत्ते अवाप्ताः कला घट्यः निशो निशीथिन्याः गता अतीताभवंतीत्यर्थः ननु नक्षत्रध्रुवांकानामत्रानिरूपणात्कथमनेन प्रकारेण रात्रिगतेष्टकाल

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

ज्ञानसाधनं शक्यमतआह मदुक्ततन्त्रादिति मया सूर्यसिद्धान्तशिरोमणिग्रहलाघवादिनानाग्रंथयथाविध्यध्ययननिष्पादितप्रचु
रज्ञानप्रयुक्ततत्तदर्थकौशलेन उक्तोयः खेटप्रकाशाख्यो ग्रन्थस्तन्त्रत्वेन व्यवह्रियमाणत्वात्तन्त्रसञ्ज्ञः तंत्रंप्रधानेसिद्धान्तेतन्तुवायेप
रिच्छदइति कोशात्सिद्धान्ताविरुद्धगणितप्रधानत्वेन शिष्टसंमतः धनुर्ज्यादिकल्पनां विनैवमध्यमस्पष्टतिथ्यातिग्रहणादिसाधनं
सर्वं भगवत्यनुग्रहसिद्धस्वभुजबलार्जितानेकदेशाधिपत्यस्वदेशीयरणजीतसिंहनामकक्षितिपालप्रधानप्रतापोदयकालीनवर्षमेवशाकं
प्रकल्प्य तद्वर्षादेव गणितादिप्रक्रिययाहर्गणवलयादिसाधनपूर्वकं संपाद्य स्फुटं दर्शितं यत्रग्रंथे तस्मादेव स्फुटनक्षत्रध्रुवानवगम्य
वदेत् अपिशब्दादन्यग्रंथेभ्योप्यवगम्यवदेत्यर्थः तेच दास्राद्ध्रुवकागजा विधुदृशो नागाग्नयोंकाब्धयो दृक्तर्काश्च रसाद्रयोब्धिख
चराः षट्खेंदवःस्त्रीदिशः ॥ गोर्कानागवृषाश्वबाणतिथयः खाब्दागुणाष्टेन्दवोष्टांकक्ष्माद्विधराद्दृशो जिनदृशस्त्रिंशद्दृशो दृग्जिनाः
१शरेषुदस्राविधुषड्दृशोष्टेष्वक्ष्युन्मिताः पंचभसंमिताश्व॥रसाष्टनेत्राणिखदृक्त्रयोक्षदृगग्नयो गोत्रसुराः खमंशाः २ इति तत्रदर्शिताः
एतेमध्यध्रुवांशा उक्तास्तेषां स्वस्वदेशीयत्वकरणार्थमपि । स्वेषु निघ्न्यक्षभार्कोद्धृतास्तैर्लवैः प्राचियुक्ता वियुक्ताः परस्याध्रुवाः ॥
कार्यमेवंतु याम्ये शरेथोत्तरेत्वन्यथा स्युस्तदा स्वस्वदेशध्रुवाः१ इत्युपायोपितत्रोक्त इति एवमुदयास्तनक्षत्रध्रुवान्स्वस्वदेशीयानवधा
र्य रात्रावपीष्टकालज्ञानं संपादयेदित्यर्थः यद्यपि युगाद्यहर्गणादिना ग्रहादिसाधनं यत्र तस्य तंत्रसंज्ञा शकाद्यहर्गणादिना यत्र तस्य
करणसंज्ञा कल्पाद्यहर्गणादितःसाधनं यत्र तस्य सिद्धान्तसंज्ञातिप्राचीनानां संकेतस्तथापि लक्षणया करणबोधकमत्रतंत्रपदम् ॥८॥



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

पुनरिष्टकालशुद्धयर्थं जन्माधानमध्यवर्त्तिकालस्यापातज्ञानायाह जन्मनीति जन्मनि जन्मकाले सूर्योदयमारभ्य घटीपलप्राणा द्यात्मके येंगगभोग्यलवाः जन्मकालीनराश्यादिस्पष्टलग्नस्य भोग्यांशाः तथाब्जस्य चंद्रस्यतत्रैव ये गतभागाः तद्योगःयेस्पष्ट जन्मलग्नभोग्यांशाः ये च जन्मचंद्रस्पष्टभुक्तांशास्तेषांयोगः अंबरसिद्धयुतः चत्वारिंशदुत्तरशतद्वययुतः असौ जन्माधानयुगान्तर हानि जन्माधानयोर्यद्युगं द्वयं तदन्तः तदुभयमध्यवर्तीनि अहानि दिनानि भवन्तीत्यर्थः यानाद्यंगेयुगःपुंसियुगंयुग्मेकृताद्दिष्वि तिकोशाद्युगशब्दोयुग्मपरः अहानीति विधेयापेक्षं बहुत्वं अत्र शतत्रयादधिकानांचत्वारिंशदुत्तरशतद्वयादल्पानां जन्माधान

जन्मन्यङ्गगभोग्यलवा ये तत्राब्जस्य च ये गतभागाः ॥ तद्योगोम्बरसिद्धयुतोसौ जन्माधानयुगान्त रहानि ॥ ९ ॥ आधानेन्दुसमञ्जनिलग्नं चेदाधानतनुप्रतिमोब्जः ॥ शुद्धःस्यात्समयोत्रतदानीं व्यत्यासेन्तरहस्स्वनुपातः ॥ १० ॥

मध्यवर्त्तिदिनानां प्रायेण भावोभिप्रेतःश्रूयते तु सप्तभिरष्टभिरपि मासैस्तथा वर्षाद्यधिककालेनापि प्रसवः अतोऽप्रामाण्यशंकास्कं दितत्वादस्य ज्ञानस्यापातत्वमितिभावः क्वचिद्व्यभिचारेपिसर्वत्रप्रसिद्धत्वात् यद्वैभिरेवदिवसैर्जन्मिनामयमिष्टशुद्ध्युपायइति न क्वापि व्यभिचारः ॥ ९ ॥ अथशुद्धेष्टकालज्ञानायोपायान्तरमाह आधानेंदुसममिति आधानकालीनचंद्रस्पष्टराश्यादिसमान राश्यादिकं स्फुटं जन्मलग्नं चेत् एवं जन्मकालीनचन्द्रस्पष्टराश्यादिसमानराश्यादिस्फुटीकृतमाधानलग्नं च स्यात्तदा जन्मकाली

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

नचंद्रलग्नाभ्यामाधानीयलग्नचंद्रयोः क्रमेण तुल्यत्वे जन्मकालिकेष्टकालशुद्धिरेव व्यत्यासे तयोः साम्याभावे अन्तरद्वस्तुजन्मा धानमध्यदिनेष्वनुपातः कर्त्तव्यः अहःशब्दोत्रघटीपलादिकालस्याप्युपलक्षकः अनुपाते कर्त्तव्ये यावता कालेनपक्षद्वयएव चंद्रलग्न योः साम्यं भवितुमर्हति प्रथमं स समयोवगंतव्यः ततश्चंद्रे चान्द्रमासपरिवर्त्तनेन लग्ने चदिनादिपरिवर्त्तनेनतथाघटचादीनामुपचयापच यादिना चापाततोऽवगमे कालस्य जातेऽनुपातः तथाहि यद्येभिरेवराश्याद्यवयवैरियान्‌दिनाद्यात्मकः कालः फलं तदैभिरन्तरांशैः कियान्‌इतिकृते दिनादिघटचाद्यात्मकइच्छाफलं संपद्यते इतितथाच जन्मलग्नचंद्रमसोरेवपरिवर्त्तनेनघटचादेर्वृद्धिह्रासादिना वा सा म्यं संपाद्य स्वेष्टजन्मादिकालविशोधनं विधेयं सुधीभिरिति ॥१०॥ पुनर्जन्माद्याविष्टकालशुद्धिज्ञानं प्रकारांतरेण दर्शयति केंद्रादिभा

केन्द्रादिभावेषु यता हिभावात् पार्श्वद्वयं खेटयुतं स्फुटं स्यात् ॥
तत्खेटयोरन्तरखण्डमग्ग्यग्रहेऋणंपूर्वखगे धनं च ॥ ११ ॥

वेष्विति भावेष्वितिसप्तमी निर्द्धारणे केंद्रपणफरापोक्लिमसंज्ञभावेषुमध्ये केंद्रात्परं पणफरं परतस्तुसर्वमापोक्लिममित्याचार्यनिर्दिष्टेषु मध्येयस्माद्भावात्पार्श्वद्वयं द्वितीयद्वादशाविति यावत् ग्रहयुतंस्यात् प्रथमंद्वितीयद्वादशौ केंद्रतो ग्रहयुक्तौ द्रष्टव्यौ तदभावे पणफरतः तद भावेचापोक्लिमतः पुनर्द्वितीयद्वादशस्थग्रहस्पष्टयोराश्याद्यात्मकयोरंतरं कार्यं ततस्तस्यांतरस्य खंडम् अग्र्यग्रहे तस्माद्भावादग्रिमे द्वितीयस्थे ऋणंहीनंकार्यम् पूर्वखगे द्वादशस्थे धनं योजनीय एवं संस्कारे कृते द्वितीयद्वादशस्थयोर्ग्रहयोः साम्यं राश्यंशादिना भवतीत्यर्थः॥११॥



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

ततः किमित्यतस्तत्कृत्यशेषमाह तद्भावसाम्यइति तौ च द्विद्वादशस्थौ ग्रहौ खंडयोगवियोगात्मकसंस्कारेण समीकृतराश्यादिस्पष्टौ
भावश्च तन्मध्यवर्त्तीसोपि स्पष्टराश्याद्यवयवः तयोस्तद्भावयोर्ग्रहभावस्पष्टयोः साम्ये राश्यंशादिना तुल्यत्वे जनीष्टशुद्धिः जन्मादा
विष्टकालः शुद्धोनिरंतर एवावगंतव्यइत्यर्थः न्यूनाधिकत्वे तु समीकृतद्विद्वादशस्थग्रहस्पष्टात् भावस्पष्टस्य न्यूनत्वेऽधिकत्वे चेत्यर्थः
तत्रन्यूनत्वेसति अनुपातेन यावन्ति पलानि लभ्यंते तानीष्टकाले स्वं धनं कार्याणि योज्यानि अधिकत्वेतु तानि अस्वं ऋणं वियोज्यानी
तियावत् एवंसंस्कृतइष्टकालः शुद्धो भवतीति अत्रापि त्रिंशतांशैः स्वस्वोदयपलानि लभ्यंते तदान्यूनाधिकांशैः कतीतिरीत्याऽनुपा

तद्भावसाम्येत्रजनीष्टशुद्धिर्न्यूनाधिकत्वे तु तदिष्टकाले ॥ स्वमस्वमंशेष्वनुपाततो यत् पलानि तैःसंस्कृ
त इष्टकालः ॥ १२ ॥ यद्वाजनेर्यदिहपर्वपुरातदन्ते योंशोधिकारिणइहापि च पञ्च ये स्युः ॥ यश्चौ
जसैषु सहितोस्य विहायराशीन् खंवाङ्गमंशसदृशंयदिशुद्धमिष्टम् ॥ १३ ॥

तःकार्यः ॥ १२ ॥ पुनरपि प्रकारांतरेणेष्टकालशुद्धिमनायासेन दर्शयति यद्वेति यद्वा प्रकारांतरेण तत्रक्रियानिरूप्यते तामाह जनेरिति
जन्मप्रश्नादितः पुरा पूर्वंसजातीयपर्वांतराव्यवहितपूर्वकालेऽतीतंयत्पर्वपक्षांतत्वेन प्रसिद्धं दर्शपूर्णिमान्यतरत् तदंतेयोंशः अंशशब्दे
नतत्कालीनस्पष्टलग्नराश्यादिरुच्यते वस्तुतस्तु तदंतलग्नेधिकारिण इति पाठः साधुः तथा च पर्वांतलग्ने ये पञ्चाधिकारिणस्तेपि ज्ञा

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

तव्याः तथाहि एको जन्मादिलग्नेशः द्वितीयः पर्वांतलग्नेशः तृतीयस्त्रैराशिकेशः सच मेषादिचतुर्णां त्रैराशिकपारविसिताॅर्किभृ
गवोह्नि निशि गुरुशशिचांद्रयसृजोन्यथाहरेः शनिकुजेज्यविधवोग्रेइतिरीत्या गणनीयश्चतुर्थः पर्वान्तहोरेशः रविचंद्रनवांशेशइति
केचित् पुण्यसद्मराशीशइत्यपिकेचित् पंचमस्तु दिवा सूर्यराशीशः रात्रौ चन्द्रराशीशइति यद्वा पंचाधिकारिणः सूर्यः १ चंद्रः २
जन्मलग्नं ३ पुण्यसद्मेशभं ४ पर्वांतलग्नं ५ इत्यपिमनुष्यजातकादितो ज्ञेयं तथाचैषां मध्ये यः षड्विधादिबलेनबलिष्ठः
अस्य राशीन् विहाय खं दशमं अथवा अंगं लग्नं अंशसदृशं एषु पंचाधिकारिषुमध्ये बलिष्ठग्रहस्यांशादिना लग्नदशमान्यतर

तन्वादिभावान्खचरांश्च कृत्वा स्पष्टान् फलं कीर्त्तयितुं क्षमः स्यात् ॥ पञ्चाङ्गपत्रस्थखगान् स्वकाले
नयेदनायासतएवतस्मात् ॥ १४ ॥ अग्रिमातपश्चिमंशोधयेत्सर्वदा वारघट्यादिकाद्वारघट्यादि
कम् ॥ पत्रिकास्थग्रहेष्टान्निजेष्टंक्रमात्खेष्टतः पत्रिकास्थग्रहेष्टंतथा ॥ १५ ॥

स्यांशादेःसंख्यया साम्यं तुल्यत्वं यदितदा शुद्धमिष्टम् इष्टकालः शुद्धोनिरंतरो ज्ञेयइत्यर्थः ॥ १३ ॥ अथ ग्रहादिस्पष्टीकरण
कैमर्थ्याकांक्षां पूरयन्ननायासेन स्पष्टीकरणेतिकर्त्तव्यतां प्रतिजानीते तन्वादिभावानिति लग्नादिद्वादशभावान् ससंधीन् ग्रहांश्चराश्यं
शकलाद्यात्मकत्वेन स्पष्टान् विधायैव फलं कीर्त्तयितुं वक्तुं शुक्तः स्यात् शेषं स्पष्टम् ॥ १४ ॥ तत्रेतिकर्त्तव्यतां दर्शयति अग्रिमादिति
अग्रिमात वारघट्यादिरूपात् स्वेष्टपत्रिकास्थग्रहेष्टान्यतरस्मात् पश्चिमं स्वेष्टपत्रिकास्थग्रहेष्टान्यतरद्वारघट्यादिरूपमेवक्रमात्



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

शोधयेदित्यन्वयः सर्वदेत्यनेन कदापिविपर्ययोनकार्यइत्यर्थः अर्धस्तुस्पष्टः ॥ १५ ॥ अग्रेवर्त्तमानात्पश्चाद्वर्त्तमानस्येष्टस्यशोधनानं
तरंकिंकर्त्तव्यमित्याकांक्षायामाह शेषवारादीति सार्द्धश्लोकेन शेषं शोधनेऽवदिष्टंवारादि, सर्वंशिनघटीपलात्मकं पलीकृत्य दि
नानिषष्ट्यासंगुण्य घटयः कार्याः पुनर्घटीः षष्ट्यासंगुण्य पलानिकृत्वा सर्वपलात्मकं जायते इत्यर्थः अयमर्थः अनुपातेइच्छायाः
प्रमाणसजातीयायाएवोचितत्वेन प्रमाणस्यप्रकृतेऽनायाससिद्धयर्थंपलात्मकत्वोपगमेनेच्छायाअपिपलीकरणमुपपन्नं प्रमाणमिच्छा
चसमानजाती इत्युक्तेः ततइच्छापलानि कलात्मिकया सूर्यादिस्वस्वगत्यागुणितानिशतगुणितषट्त्रिंशदात्मकप्रमाणेन भक्तानिल

शेषवारादिसर्वंपलीकृत्यच स्वस्वगत्याहतंखाभ्रषट्त्र्युद्धृतम् ॥ लब्धलिप्ताः स्वमस्वं क्रमात्स्वेष्टतःपत्रस
स्थग्रहेपृष्ठगेचाग्रगे ॥ १६ ॥ कृत्यमेतत्प्रतीपंप्रतीपग्रहेत्वेवमुक्तानुपातात्स्फुटाःस्युर्ग्रहाः ॥ मान्दिरेवं
विलोमञ्चतुर्घट्यहःशेषतोर्कादिवारेब्धिनाडीमितः ॥ १७ ॥

ब्धंप्रमाणफलसजातीयमिच्छाफलंकलात्मकमेव ताः कलाः पंचांगपत्रस्थेग्रहेस्वेष्टतःपृष्ठगेसति स्वं धनंकार्याःस्वेष्टतोऽग्रगेग्रहेतुता
अस्वमृणंकार्याावियोज्याइत्यर्थः ॥ १६ ॥ कृत्यमिति प्रतीपग्रहे वक्रग्रहे उक्तं कृत्यं स्वर्णादिरूपं प्रतीपं यत्रस्वंकर्त्तव्यं
क्रमात्प्राप्तंतत्रऋणंताःकलावियोज्याः यत्रास्वंतत्रस्वं ताः कलायोज्याः एवमुक्तानुपातेनैवविनायासंधीमताग्रहाः साध्याइत्यर्थः एवं
मांदिनामकमपिग्रहमनायासेनसाधयत्यर्द्धश्लोकेन मान्दिरेवमिति अर्कादिवारे सूर्यादिवारे चतुर्घटीमितदिनशेषतो विलोमम्



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

अब्धिनाडीमितो मान्दिः मन्दपुत्रत्वेनप्रसिद्धोदशमोग्रहः साध्यः तथाहि प्रथमं रविवारे सूर्योदयमारभ्य षड्विंशतिघटिकाभ्योनंत रं चतुर्घटीमितदिनशेषे घटीचतुष्टयात्मकमेवमध्यमं मान्दीष्टं चंद्रवारे द्वाविंशतिघटिकोत्तरं भौमवारेऽष्टादशघटिकोत्तरं बुधे चतुर्द शोत्तरं गुरौ दशोत्तरं भृगौषड्डुत्तरं शनौ घटीद्वयमात्रोत्तरं मध्यमाश्चतस्रश्चतस्रोघटचोरविवाराद्विलोमंबोध्याः अत्र मांदिघटीनांतदव धिघटीनांच मध्यमत्वंत्रिंशद्घटीपरिमितदिनमात्रसंबंधित्वं तच्च सायनमेषतुलान्यतमसंक्रान्तिदिनात्मकविषुवद्दिनावच्छेदेनैवतयोः स्वेष्टदिनसम्बंधित्वसाधनमेव तद्घटीनांस्पष्टीकरणमिति यतोत्रोक्तागुलिकापरपर्यायस्यमांदेर्घटचस्तदवधिघटचश्चमध्यमाएव ताः सर्वाः स्पष्टीकृतामांदिस्पष्टीकरणे उपयुक्ताः नान्यथा तत्र तावदवधिघटीस्पष्टीकरणायानुपातः यदि त्रिंशद्घटिकापरिमितदिवसे रविवारे षड्विंशत्युत्तरं मांदिसंबंधिन्यश्चतस्रोघटचोऽवगम्यंते तदातन्न्यूनाधिकस्येष्टदिनेकियद्घटिकोत्तरमिति लब्धारविवारेतदवधि घटिकाः एवं चन्द्रवारादिसर्ववारेषु पुनर्मांदिघटीस्पष्टीकरणायानुपातः यदि त्रिंशद्घटीमितदिनेचतस्रोघटचो लभ्यंते तदा ततोन्यूना धिकदिनेकतीतिलब्धामांदिघटिकाः तदुक्तं तरुखरदयभयनयतनिखनिनाडचोभास्करादिवारेषु दिनमानघटीगुणितानागह्रतागुलि कनाडिकाः स्पष्टाइति अत्रवृद्धास्तु रविवारादिशन्यंतंगुलिकादि निरूप्यते ॥ दिवसानष्टधाकृत्वावारेशाद्गणयेत्क्रमात् १अष्टमांशोनि रीशः स्याद्रव्यंशः कालसंज्ञकः॥भौमांशोमृत्युरादिष्टोगुर्वंशोयमघंटकः २ सौम्यांशोर्द्धप्रहरकः शन्यंशोगुलिकःस्मृतः ॥ रात्रीरप्यष्टधा कृत्वावारेशात्पंचमादितः ३ गणयेदष्टमः खंडोनिष्पतिः परिकीर्तितइति संग्रहेपि तथाचरविवारादौदिनेगुलिकसंस्थितिः ॥ सप्ततुशर



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

वेदत्रिद्विकुखंडेषुहिकमात् ॥ रात्रौत्रिद्विकुसप्ततुंपंचतुर्येषुततस्थितिरिति तत्रपूर्वोक्तादस्यविरुद्धत्वेनमांदीष्टकालनिर्णयाभावात्संदेहे कथंमांदिराश्यादिज्ञानमतस्तरुखरेत्यादिगुलिकेष्टस्यस्थूलत्वं तत्संबद्धदिनाद्यष्टमांशस्यसूक्ष्मत्वमिति विभावनीयं वस्तुतस्तु कारकग्रहस्यसगुलिकत्वप्रयुक्तफलादावस्योपयोगः अन्यत्रतु पूर्वोक्ततरुखरादिनिर्दिष्टस्यैवेतिसारं तत्र गुलिकस्पष्टीकरणंतुलग्नस्पष्टवत् तथाहि सूर्यादितत्तद्वारेषु पूर्वोक्ततत्तदवधिभूतषड्विंशत्यादिघट्यात्मकमिष्टकालंप्रकल्प्य लग्नवदेवसायनसूर्यान्मांदिस्पष्टीकरणमिति लग्नवदानेतव्योराश्यंशकलादिरूपकोगुलिकइतिवचनात् मांदेः फलमपिशनिवत्मन्दात्मजःप्राणहरोतिपापीत्युक्तेः क्वचिल्लग्न

सायनांशनिजेष्टकालिकभानुभोग्यलवाहतात्स्वोदयात्स्वगुणाप्तभोग्यपलैर्वियुक्स्वपलव्रजात् ॥
व्यग्रिमोदयतः खरामहृतं तु शेषमशुद्धहृच्छुद्धराशियुतंलवादिफलं तनुर्व्ययनांशकम् ॥ १८ ॥

शुद्धिज्ञानादावप्यस्योपयोगः मांद्यंशकात्कोणगतंविलग्नमित्यादि सर्वार्थचिंतामण्यादावप्युक्तमत्रानुकूलमिति ॥ १७ ॥

लग्नादिभावान्खचरांश्चकृत्वास्पष्टानित्युक्तत्वात्प्राधान्येनसर्वत्रेष्टानिष्टफलकथनोपयोगितयाप्रकृतेऽपेक्षितलग्नस्पष्टीकरणेतिकर्त्तव्यतांदर्शयति सायनांशेतिश्लोकेन सायनांशः अयनांशैःसहितोनिजेष्टकालिकःपूर्वोक्तरीत्यास्पष्टीकृतोभानुः अयमर्थः स्वस्वक्षितिजेस्वस्वेष्टकाले यः क्रान्तिमंडलप्रदेशोलगति तस्यप्रदेशस्यलग्नसंज्ञेतिप्रसिद्धंज्योतिर्विदाम् अतःस्वस्वसूर्योदयेरविरेवलग्नं तथा क्रान्तिविषुवद्वृत्तयोः संपातेसृष्ट्यारम्भसमयेभगवतामेषादिःस्थापितः संप्रति स क्रांतिपातः कालवशात्प्रत्यग्यावद्भिरंशैःशैथिल्यंप्राप्तोऽधो

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

लंबितोभूत् तावदंशानामयनांशसंज्ञा क्रान्तिवृत्तविषुवद्वृत्तसम्पातावच्छिन्नमेषादिवर्त्तमानमेषाद्योरंतरांशा एवायनांशा इतिभावः ते
च प्राक्प्रत्यग्वासप्तविंशतिभागपर्यन्तमेवसंपाताद्भवंतीति केचित् तस्मात्सायनांशादेवरवेर्लग्नादिस्पष्टीकरणमुचितं ततएवचसंसा
रिणांशुभाशुभफलान्यपिवक्तुंशक्यंते अतः सायनांशएवरविरर्थात्संपातावच्छिन्नमेषादिरेवच्छायालग्नदिनमानादिसाधनादौगणितेउप
योगीनान्यथा प्रकृतमुच्यते वर्त्तमानस्वेष्टकालेसायनांशंदिवाकरस्पष्टंकर्मभूमौविलिख्य तदंशास्त्रिंशतः शोध्यास्तएवावशिष्टा
स्तस्यराशेर्भोग्यांशाभवंति राशिस्त्वविकृतएवस्थाप्यः यस्येष्टकालीनस्पष्टसूर्यसंबंधिनोराशेर्भुक्तांशाग्रहस्पष्टीकरणप्रक्रियया ऽऽनी
तास्तस्यैवभोग्यांशाजाता इतिभावः पुनस्तस्यैवराशेस्तत्तद्देशीयोदयपलैस्तेभोग्यांशागुणिताः खगुणैर्भक्तास्तद्राशेरेवेष्टकालेभोग्य
पलानिभवंति यदित्रिंशतांशैस्तद्राशेः स्वोदयपलानिलभ्यंते तदैभिर्भोग्यांशैः कतिपलानीत्यनुपाताकारएवायमुक्त इति अत्र भो
ग्यपलेभ्यइष्टपलानामल्पत्वेत्विष्टपलान्येवत्रिंशता ऽऽहत्यस्वोदयपलैरुद्धृत्यलब्धांशयुक्तोरविरेवलग्नमित्यपिबोध्यं पुनस्तैर्भोग्यपलै
रूनानिरहितानिस्वेष्टघटीपलानिकार्याणि तत आनीतभोग्यपलरहितादिष्टपलसमूहात् व्यग्रिमोदयतः स्ततः विगताअग्रिमोदयाय
स्मात् तथाच भोग्यपलोनस्वेष्टपलव्रजात् यावंत्यग्रिमराश्युदयपलानिशुद्ध्यंतिततश्च्यवितुमर्हंति तावंतिविशोधयेदित्यर्थः पुनरव
शिष्टपलेभ्यइष्टभागाद्यानयनायानुपातः यद्यशुद्धराश्युदयपलैस्त्रिंशदंशालभ्यंते तदावशिष्टपलैः कतीति अयमेवखरामहतंतुशे
षमशुद्धहृदित्यनेनोक्तः अशुद्धराश्युदयस्यपलात्मकस्यप्रमाणत्वात् त्रिंशतः फलत्वात् अवशिष्टपलानामिच्छात्वात् फलमिच्छा
गुणमाद्यभक्तमिच्छाफलंस्यादित्युपपन्नं तेच प्रमाणफलसजातीया इच्छाफलभूतालब्धांशाः ततो राशिस्थानेशुद्धोराशिर्योज्यः । पुनः



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

शुद्धराशियुतमंशादिफलं व्ययनांशकं विगताअयनांशायस्मादेवंभूतंसत् तनु स्पष्टमिष्टलग्नंभवतीति अत्रोदाहरणं सं० १९४६
माद्रशुक्लपंचम्यांशनाविष्टं ४७ तत्रस्फुटसूर्यः ४।१६।५४ सायनः ५।८।४२ अस्यभोग्यलवैः २१।१८ कन्यास्वोदयपलानि
३५३ गुणितानि ७५।१८।५४ त्रिंशताभक्तानिलब्धम् २५०।१८।५४ जातानिभोग्यपलानि एतानिस्वेष्टपलेभ्यः २८२० शो
धितानिशेषं २५६९।४१।६ अस्मात्तु नरग्रिमतुलालिधनुर्मृगकुंभमीनमेषवृषयुग्मानांस्वोदयपलानि २५४० शोधितानिशेषं २९।
४१।६ इदं ३० घ्नमशुद्धकर्कोदयेन ३४८ भक्तंलब्धं०।५।७ पुनः शुद्धोयुग्मराशीराशिस्थानेयोजितः ३।०।५।७ पुनरयनां

तम्यांतनुंतुतनुयात्सवितुःसषड्भाद्धानूदयाद्युमितिहीननिजेष्टकालात ॥
तात्कालिकद्युकृतिसावनइष्टकालोथोक्तात्प्रतीपविधिनातउयाद्गतांताम् ॥ १९ ॥

शाः २२।४८ अतः पातिताजाताततनु २।७।१७।७ रिति सिद्धम् तत्रचरखण्डानि ७५।६०।२५ स्वोदयास्तु मे. २०३ वृ.
२३९ मि. २९८ क. ३४८ सिंह. ३५९ क. ३५३ तु. ३५३ वृ. ३५९ ध. ३४८ म. २९८ कुं. २३९ मी. २०३ इति ॥ १८ ॥
अथ सुगमोपायेनरात्रावपिलग्नसाधनप्रकारंदर्शयति तम्यामिति रजनीयामिनीतमीतिकोशात्तमी रात्रिस्तस्यामिष्टकालेलग्नंचेत्
सिसाधयिषितं तदासूर्योदयाद्द्युद्यादिरूपमिष्टं तद्दिनमानहीनंसत्तत्सेष्टलग्नसाधनोपयोगि तथा तद्दिवसीयसूर्येषड्राशीन् संयोज्य

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

स्वकर्मयोग्यंसूर्यंच प्रकल्प्यताभ्यां सूर्येष्टकालाभ्यांपूर्ववल्लग्नंसाधयेत् सूर्यस्पष्टविशेषादिष्टकालविशेषमपिदर्शयति तात्कालिकेति
द्युक्कृति दिवाकरे तात्कालिके इष्टकालिकेसति सावनइष्टकालः सावनमानेनकल्पनीयः तच्च इनोदयद्वयांतरं तदर्कसावनंदिनं तदेव
मेदिनीदिनमिति एकस्मात्सूर्योदयाद्वितीयसूर्योदयपर्यन्तंसावनंदिनं तत्षष्ट्यंशः सावनघटिकेत्यर्थः अर्थादुदयकालीनसूर्येनक्षत्रोद
येष्टकालोनाक्षत्रः सोपि भवासरस्तुभभ्रमइत्युक्तः यन्नक्षत्रावच्छेदेनपूर्वदिनेसूर्यउदितः द्वितीयदिनेतन्नक्षत्रोदयपर्यंतंभदिनंसूर्यस्तुप
श्चादुदेष्यति तथाच सावनान्नाक्षत्रंकिंचिदल्पमितिभावः अत्रोपपत्तिः स्वबुद्ध्याशिरोमण्यादौचावगंतव्या अथ भुक्तलग्नसाधनेति
कर्त्तव्यतांदर्शयाति अथोक्तादिति उक्ताद्भोग्यलग्नसाधनप्रकारात् प्रतीपविधिना विपरीतप्रकारेण गतां भुक्तां तनु लग्नं तनुयात् सा
धयेत् अयमर्थः अत्रसूर्यस्यभुक्तांशेभ्यएवभुक्तपलान्यानीयतानीष्टपलेभ्योविशोध्यतत्रावशिष्टपलेभ्यो भुक्तराश्युदयानपास्यशेषं
त्रिंशतासंगुण्याशुद्धभुक्तराश्युदयपलैर्विभज्यफलंभुक्तांशा अशुद्धराशितएवपात्यास्तत्र भुक्तलग्नं व्ययनांशंसत्स्यादिति अत्रोपपत्ति
रपिसुगमा अत्रलग्नादेवससंधिद्वादशभावानयनेविनैवगणितं प्रकारोपि इष्टलग्नाद्वक्ष्यमाणविधिनाचरमानयेत् ॥ लग्नेमेषादिषड्भस्थेतेनो
नास्तिथिनाडिकाः १तुलादिषड्भेसहिताःपृथक्स्थास्तेंशकाःपुनः ॥ तैरंशैःसहितंलग्नंलग्नसंधिः प्रजायते २ संधिस्तदंशसहिताधनभावः
प्रजायते ३ एवं षड्भावसंपत्तौप्रतिभावंषड्षड्राशियोगततस्ततः सप्तमसप्तमभावसिद्धिरेवंद्वादशभावसाधनेसुगमोज्ञेय इति ॥ १९ ॥





CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

अथदशमलग्नसाधनायसामग्रींसंपादयति अथमध्यलग्नेति अथ लग्नस्पष्टसाधनानंतरं मध्यलग्नमतये दशमलग्नज्ञानाय नतंब्रुवे ग्रहाणां नतादिज्ञानायइतरव्यावृत्तंतत्स्वरूपंब्रुवेकथयामि तस्यप्रकृतानुपयुक्तत्वशंकांवारयतियदिहेति यत्नतमेवेष्टकालंप्रकल्प्य तद्विधिः दशमसाधनेतिकर्त्तव्यतायुज्यते अत्र प्रकृतेदशमादिसाधने केचन पंडिताः नीलकंठप्रभृतयः चतुर्विधं दिनरात्रिभेदेननतमेवद्विविधं पूर्वद्विविधंपश्चिममिति जगुः कल्पयामासुः केचन केशवप्रभृतयोविद्वांसः द्विविधंनतंद्विविधमुन्नतंचप्राहुरित्यर्थः अयं भावः इष्टकाले स्वखमध्यतोऽपेक्षितोग्रहोयत्रयावदधोलंबितोस्तितावत्प्रदेशस्यकालस्यवानतसंज्ञा क्षितिजाद्यावदूर्ध्वंगतस्तावत्प्रदेशस्यकालस्यवो

अथ मध्यलग्नमतयेनतं ब्रुवे यदिहेष्टकालमवधार्य्य तद्विधिः ॥ नतमत्रकेचन चतुर्विधंजगुर्द्विविधं नतं द्विविधमुन्नतंपरे ॥ २० ॥ उन्नतंकुतलतोनतंखतः खेचरांतमितिगोलविन्मतम् ॥ उन्नतंनतमिहाकल्प्यतैः कल्पितंकिलचतुर्विधंनतम् ॥ २१ ॥

न्नतसंज्ञेति तत्रचतुर्धानतवादिनांसंकेतश्लोकः पूर्वंनतंस्यादिनरात्रिखंडमिति पूर्वसंकेतसिद्धनतवादिनांतुरात्रेःशेषमितंयुतंदिनदले नाह्नोगतंशेषकंविश्लेष्यंखलुपूर्वपश्चिमनतमित्यादि ॥ २० ॥ बुद्ध्यारोहायतोन्नतस्वरूपेदर्शयन्नुक्तमेवार्थंविशदयति उन्नतमिति सर्वत्रदिवाकरोमध्याह्नकालेस्वस्वयाम्योत्तरवृत्तक्रान्तिवृत्तसम्पातावच्छेदेनस्वपूर्वापरक्षितिजयोर्मध्येवर्त्तते परंतुक्षितेरुपर्य्येव एवम् निशीथे स्वादृश्यप्रदेशावच्छिन्नतत्सम्पातावच्छेदेनैवेति प्रसिद्धं तथाच स्वस्वखमध्यत्वेनाभिमतयाम्योत्तरवृत्ताद्यावद्भिः प्राणपला

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

दिभिरुभयतोऽधोदेशेवर्त्ततेतावान्कालोनतसंज्ञयाव्यपदिश्यते एवं स्वकुतलावच्छिन्नतद्वृत्तसंपाताद्यावद्भिरस्त्रादिभिरुभयतऊर्ध्वदे
शेवर्त्ततेतावान् कालउन्नतसंज्ञयोच्यते सर्वेषामपिग्रहाणांसूर्यवदेवनतोन्नतादिकमवगंतव्यम् एतद्गोलविन्मतं सिद्धांतविदांस्वसंकेतसि
द्धमभिमतं दक्षिणोत्तरध्रुवाद्यधोदेशेनिवसतांतथाविधनतोन्नतादिव्यवहारस्यस्पष्टमप्रतीयमानत्वेपिसुधियोपपादयितुंशक्यत्वात् तै
श्चतुर्विधनतवादिभिरुन्नतंनतमाकलय्य दशमानयनायउन्नतमिष्टमप्रकल्प्य तत्स्थानेपिनतमेवेष्टंप्रकल्प्य चतुर्ष्वपिखण्डेषुनतमेवेष्टं
प्रकल्प्यदशमानयनंक्रियतेइत्यर्थः तदुक्तंपूर्वंनतंस्यादिनरात्रिखंडंदिवानिशोरिष्टघटीविहीनम् ॥ दिवानिशोरिष्टघटीषुशुद्धंद्युरात्रखंड

एतन्मतेनिशिसषड्भरवेर्दिनेर्काल्लंकोदयैरुदयवच्चचतुर्नतेभ्यः ॥
माध्यंक्रमेणगतगम्यगतैष्यमेवंभोग्यंन्यगादिदशमङ्किलकेशवाद्यैः ॥ २२ ॥

त्वपरं नतंस्यादिति ॥ २१ ॥ एवंनतोन्नतस्वरूपमभिधायमतद्वयेपिदशमलग्नादिसाधनप्रकारंभुक्तभोग्यत्वादिव्यवस्थांचनिरूपय
तिएतन्मतेइतिचतुर्विधनतस्यैवदशमसिद्ध्युपयोगितेतिवादिनीलकंठादिविपश्चिन्मतेनिशिरात्रौइष्टकालेसतिसषड्भात्तात्कालिकात्साय
नसूर्यात् पूर्वपश्चिमान्यतमतात्मकंनैशमेवेष्टंप्रकल्प्यनतक्रमात्भुक्तभोग्यमर्यादयालग्नवद्दशमंलंकोदयैःसाधनीयं दिनेनाड्यादि
ष्टकालेतु सायनात्तात्कालिकादर्कादेवनतुसषड्भात् उदयवल्लग्नवत् लंकोदयैर्दिनसंबंधिपूर्वपश्चिमान्यतमनतात्मकमिष्टंप्रकल्प्य भुक्त ॥१२॥
भोग्यमर्यादयादशमलग्नंसाध्यमित्यर्थः तथाचादिनपूर्वनतेभुक्तं त्ववपश्चिमनतेभोग्यम् एवंरात्रौपूर्व नतेभुक्तंपश्चिमनतेभोग्यंदशमंलग्नव

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

त्साधनीयमिति नतोन्नताभ्यामुभाभ्यामपिपृथक्पृथग्व्यवस्थयादशमंसाध्यमितिवादिकेशवादिमते विशेषमप्याह भोग्यमिति
केशवाद्यैराचार्यैः किलेति विस्मये दशमं भोग्यं भोग्यलग्नप्रक्रिययैवसाध्यमिति न्यगादि निगदितमित्यर्थः अत्रोन्नतंतुनतं
त्रिंशच्च्युतंभवति तदुक्तं त्रिंशच्च्युतंचोन्नतमिति दशमंभोग्यरीत्यैवसाध्यंनान्यथेत्यप्युक्तं यत्पूर्वोन्नतसषड्भयुक्तरवितः पश्चान्नतादि
त्यतोयल्लंकोदयकैश्चलग्नमिवतन्माध्यमिति अत्रार्थसिद्धं भोग्यत्वमितिध्येयम् उदयवदित्युक्त्यादशमलग्नसाधनेपिनतादीष्टकालाद्गत
गम्यकालादेराधिक्येतस्यशोधयितुमशक्यत्वेन त्रिंशद्गुणादेवस्वेष्टात् स्वोदयपलैराप्तानामंशानांसूर्ययोगवियोगौकार्यावितिलग्नवद

याम्योत्तरादुभयपार्श्वगभत्रिकेर्के दृश्येप्रकल्प्यदशमंप्रथमेमतेस्यात् ॥
अर्केपरार्धउपकल्प्यनतोन्नताभ्यामर्कात्तसषड्भरवितश्चमतेद्वितीये ॥ २३ ॥

त्रापि बोध्यम् अत्रोदाहरणं प्रसिद्धत्वान्नप्रदर्शितम् उपपत्तिरपिसुगमा ॥ २२ ॥ मतद्वयेपिदशमलग्नसाधनादौविरोधाभावमनुभवसिद्ध
त्वेनोपपादयति याम्योत्तरादिति याम्योत्तरवृत्तेयत्रोपरितनदेशेक्रान्तिवृत्तसम्पातोजातः तादृशसम्पातावच्छिन्नस्वयाम्योत्तरवृत्ता
दिति यावत् उभयपार्श्वगभत्रिके तस्मादुभयपार्श्वयोः पूर्वपश्चिमखंडयोर्वर्त्तमाने भत्रिके राशित्रयाभ्यंतरे एव उभय
पार्श्वयोर्नवतिनवत्यंशांतरालएव सूर्यसंबंध्युदयास्तक्षितिजपर्यन्तमेव अतएव दृश्ये एवपूर्वपश्चिमकपालयोर्दृश्यभागे
वस्तुतः स्वनिशाद्यनवच्छिन्नेतत्प्रदेशेस्वतोवापड्राशियोगादिनावासूर्यंप्रकल्प्यदशमं प्रथममेमते चतुर्विधनतवादिमते स्यात्

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

सिद्धयतीत्यर्थः तथाच दिनार्द्धान्निशार्द्धाच्चप्रागिष्टकालेभुक्तप्रक्रिययैवगतंदशमंदिनार्द्धान्निशार्द्धाच्चानन्तरमिष्टकालेभोग्यप्रक्रिययै
वगम्यमेवेतिभावः द्वितीयेमते नतोन्नतयोर्द्वैविध्यवादिकेशवदैवज्ञादिमते अर्कं सूर्यंपरार्द्धे पश्चिमखंडे उपकल्प्य प्रकल्प्य नतो
न्नताभ्यां दशमादिसाधनोपयोगिघटिकाद्यभीष्टकालत्वेनाभिमताभ्यां तथाच पश्चिमनतमिष्टंप्रकल्प्यकेवलसायनसूर्याल्लंकोदयैर्भो
ग्यलग्नसाधनेतिकर्त्तव्यतयानिष्पादितंदशमलग्नं भवति एवं पूर्वोन्नतमिष्टंप्रकल्प्यसषड्भसायनसूर्याल्लंकोदयैः प्राग्वदेवदशमंभवती
त्यर्थः अयंभावः - स्वमध्याह्नान्निशीथपर्यन्तंदिवाकरेणपश्चिमकपालेएवभवितव्यम् तत्रैवजन्मप्रश्नादीष्टसंभवेपश्चिमनतमेवेष्टकालंक

यद्वास्वलग्नसदृशार्कदिनेनिशाधमानन्तदिष्टमतएष्यतनुर्निरक्षैः ॥
स्याद्याङ्गतोङ्गमिवसात्रचतुर्थमेतन्माध्यंविनैवनतमंगभयुक्स्फुटंस्यात ॥ २४ ॥

ल्पयित्वाभोग्यप्रक्रिययैवदशमसिद्धिः तथा स्वनिशीथान्मध्याह्नांतं यद्यपिसूर्येणपूर्वकपालएववर्त्तितव्यं तथापि षड्राशीन्दत्त्वासू
र्यंपश्चिमकपालेआकृष्यैव तत्रापिभोग्यप्रक्रिययादशमंसाध्यते अतएव तत्रपूर्वोन्नतस्येष्टकालत्वकल्पनमप्यनुकूलं यतोदशमस्यरा
श्यात्मकक्रान्तिवृत्तकिंचित्प्रदेशात्मकतयात्रापिप्राग्वद्रवेःपश्चिमदेशस्थत्वात् एतेन दशमस्यास्मिन्मतेऽभुक्तत्वेसतिभोग्यत्वंरवेः
पश्चिमकपालस्थत्वं चप्रकृतोपयोग्युपपन्नमिति एतदभिप्रायेणकेशवपद्धतौरात्रेःशेषमितमित्याद्युक्तम् ॥ २३ ॥ अथनतो
न्नतादिकल्पनां विनैवलघुप्रकारेण दशमलग्नसाधयति यद्वेति यद्वेतिप्रकारांतरं स्वलग्नसदृशार्कदिने यस्मिन्दिनेतिथिपंचां



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

गपत्रेस्वोदयक्षितिजावच्छिन्नस्वेष्टलग्नस्पष्टतुल्यराश्यादिसायनसूर्यस्पष्टसंभवस्तद्दिनेइत्यर्थः तथाच घट्याद्रिरूपंतद्दिनस्ययन्मानं तद्वियुक्ताः पष्टिघटयोरात्रिमानंतद्दिनेएवतस्यदलं तदेव निशार्द्धमानमेवेष्टंप्रकल्प्य अंगतः स्वेष्टकालिकलग्नात् सूर्यस्थानापन्नात्सायनात् अंगमिव निरक्षैर्लंकोदयैः एष्यतनुर्भोग्यलग्नरीत्यालग्नंभवति सातनुरत्रचतुर्थंज्ञेयंतस्मिन्षड्राशियोगेदशमंभवतीत्यर्थः विनैवनतं नतोन्नतादिकमजानतापि माध्यं दशमंविधातुं स्फुटंस्यात्रः सुकरंस्यादिति तिङन्तप्रतिरूपकमव्ययं तथाखेटप्रकाशेप्प्येभिरेवोक्तंभवतिसुखमिदंसायनांगान्निशार्द्धंस्वेष्टंकृत्वातनोर्यांगवद्गततनुर्व्यक्षकैः सांगभंखमितिवृंदावनेपिकेशवदैवज्ञैः कृत्वालग्नादर्कवद्रा

खाङ्गेसषड्नेतुतुरीयकामावेवंभवेद्भावचतुष्कसिद्धिः ॥
विलग्नतुर्याद्वितुरीयकामात्र्यंशान्वितेस्तोङ्गसुखेस्वपुत्रौ ॥ २५ ॥

त्रिखण्डंभूयोव्यक्षैस्तद्धटीभिर्विलग्नंचक्राद्धोंनेतेचतत्कालमेवंजायेयातामस्तमध्याख्यलग्नेइत्यादि ॥ २४ ॥ अथलग्नदशमसाधनप्रकारान्निरूप्यताभ्यामेवशेषभावसाधनप्रक्रियांदर्शयति खांगेसषड्नेत्विति खांगेदशमेंद्रीलग्नेसषड्नेषट्षड्राशियुक्ते क्रमेण तुरीयकामौचतुर्थसप्तमलग्नेभवतः एवंरीत्याभावचतुष्कसिद्धिः भावचतुष्टयं लग्नचतुर्थसप्तमदशमाश्चत्वारोभावानिष्पन्नाइत्यर्थः तत्रद्वितीयपञ्चमभावौसाधयति विलग्नतुर्याद्दिततनुभावस्पष्टरहिताच्चतुर्थाद्यस्त्रिभिरातस्तृतीयांशस्तेनयुक्तमंगंलग्नंस्वंद्वितीयभावोभवति एवं चतुर्थ

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

भावस्पष्टरहितात्सप्तमाद्यात्त्रिभिराप्तरूयंशस्तेनयुक्तं चतुर्थं पंचमभावोभवति ॥ २५ ॥ पुनारीति तथातेनैवप्रकारेण धनात्मजौ द्वि
तीयपंचमौपुनरूयंशयुतौक्रमात्तृतीयषष्ठौभवतः एवं क्रमतः षड्भावाः प्रथमद्वितीयादिक्रमेणलग्नादयईरिताः कथिताः लग्नादिषड्भा
वसाधनप्रकारोनिरूपितइत्यर्थः उक्तभावनांसन्धिसाधनप्रकारमाह संधिरिति द्वियोगार्द्धे ययोर्भावयोः सन्धेः सिसाधयिषा तयोर्द्वयो
र्योगार्द्धमेवसांधिर्नामपूर्वभावस्यविराम उत्तरभावस्यारंभः एवंससंधयःषड्भावाः प्रक्रांताः परेपि षड्भावाः ससंधयएभ्यएवभवंति ॥
कथमित्याकांक्षायामाह अंगर्क्षयुताइति योयोभावः संधिर्वाराशिषट्कयुतः सः सः ततस्ततः सप्तमः सप्तमः एवभवितुमर्हतीति अत्रोप

पुनस्तथात्र्यंशयुतौधनात्मजौतृतीयषष्ठौक्रमतःषडीरिताः ॥ सन्धिर्द्वियोगार्द्धमतःससंधयोभावाः षडं
गर्क्षयुताःपरेपिषट् ॥२६॥ रसहतनतनाड्यःस्युर्लवाहीनयुक्ताःप्रथमपरमतेर्के मध्यमंस्थूलमेवम् ॥ रवि
वदयनयुक्ताङ्गान्निशार्द्धलवास्तैर्युततनुरिहसन्धिःस्युःपुनर्द्व्यादिभावाः ॥ २७ ॥

पत्तिस्तुप्रसिद्धैव यतोयोराशिरुदयक्षितिजंस्पृशन् यावदंशादिनोदितोभवति तावदंशादिनैवततः सप्तमोराशिरस्तक्षितिजेस्फुटोभव
ति तदुक्तंशिरोमणौ योभ्युदेतिसमयेनयेनतत्सप्तमोस्तमुपयातितेनत्वित्यादि निरुक्तप्रक्रिययाएवंद्वादशैवभावानिष्पन्नाइति ॥ २६ ॥
अथातिसुगमोपायेनस्थूलदशमसाधनप्रक्रियांनिर्दिशति रसहतेत्यादिना रसहतानतनाड्यः अत्रनाडीपदंसावयवघटिकाबोधकं तथा
CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri
चावयवसत्वेसावयवाःनान्यथा तानतघट्यःरसहताः षड्गुणाःकार्याः अत्रानुपातः यदिदिनार्द्धमानात्मिकाभिः पंचदशनतघटीभि

नवतिरंशालभ्यंते तदैकयाघटयाकिमिति अत्रैकाघटी इच्छाप्रमाणफलं नवतिरंशाः तत्र प्रमाणफलं इच्छागुणं प्रमाणभक्तं लब्ध
मिच्छाफलंषडंशाः पुनरनुपातः यद्येकघटयाषडंशालभ्यंतेतदेष्टनतघटीभिःकतीत्युपपन्नं नतघटयोरसगुणाएवांशा इति एतत्साय
नमेषतुलाद्यवच्छेदेनैव विषुवक्रांतिवृत्तसंपातस्थेदिवाकरएव त्रिंशद्धटयात्मकदिनमानसत्वेइति यावत् अन्यत्र तुसांतरंदशमंभवती
तिज्ञेयं यद्यपि तत्रापि संस्कृतांशैः साधनेसुधियानिरंतरमपि दशममवगंतुंशक्यते तथापि स्थूलमेव एवंच षड्गुणानतनाड्यएवां
शास्ते अर्केसूर्येसंस्कार्याः संस्कारस्वरूपंहीनयुक्ता इति कदाहीनायुक्तावाकार्याइत्याकांक्षायामाह प्रथमपरनते इति पूर्वनतेसति
सूर्येतेहीनाः कार्याः परनतेतु सूर्येयुक्ताइत्यर्थः रात्रावप्येवंस्वबुद्धयाकार्यम् यद्वा लाघवार्थं सूर्येषड्राशीन् दत्त्वानतंचत्रिंशच्च्युतंविधा
यततआनीताअंशाःपूर्ववत्संस्कार्याः एवं भूतसंस्कारसंस्कृतोरविरेवरात्रावपिदशमंभवतीतिभावः अत्रोपपत्तिरपि पूर्वनतेखमध्याद्र
विः पूर्वस्यांलंबितोभवति पश्चिमनतेऽस्तदिशिलंबितः अतःपूर्वनतेतैरंशैरहितोरविर्दशमतुल्योभवति पश्चिमनतेतैरंशैरसहितस्तत्तु
ल्यइति रात्रावपि पूर्वोन्नतत्वषड्राशियोगादेः पूर्वाभिहितैवरीतिरिति पुनर्लग्नतएवातिसुगमप्रकारेणगणितंविनैवसकलभावस्यसाधन
प्रक्रियां दर्शयति रविवदिति अयनयुक्तादंगात् सायनाल्लग्नात् सूर्यवच्चरादिसाधनेननिशार्द्धंघटिकाद्यंसंपाद्यं तथाहि भुजस्त्रिभोनंच
तदूर्द्ध्वमङ्कर्भैर्विशेष्यमंकोर्द्धमतोभचक्रतइति अत्रसूर्यवत् सायनलग्नभुजर्क्षसंख्यचरखंडयोगतश्चरपलान्यानीय पंचदशघटीषुसायन

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

तुलादिमेषाद्योः क्रमेणधनर्णकार्याणि तद्रात्रिदलमानंभवतिसायनेमेषषड्गस्थेतेनोनास्तिथिनाडिकाः तुलादिपङ्क्ते सहिता इत्युक्तत्वात यद्वा स्वलग्नस्पष्टतुल्यराश्यादिसायनसूर्यसंभवदिनेपंचांगपत्रेयद्दिनमानं तद्रहितषष्टिघटीदलंरात्रिदलमानंसिद्धमेव तत्र घट्यों शाः पलानिचकलाज्ञेयाः एवंस्थिते लग्ने तद्योगेतनुसंधिः तनुसंधौ तद्योगे द्वितीयः पुनस्तद्योगे द्वितीयसन्धिः पुनस्तृतीय एवमग्रे लग्नादयः षड्युक्ताः सप्तमादय इत्यपिज्ञेयम् ॥ ॥ २७ ॥ अथ विंशोपकाव्याजेन ग्रहाणांभावाधीनबलाबलसाधनं खेटसंध्यन्तरमिति अत्राप्यनुपातः भावतुल्योग्रहः पूर्णफलः संधितुल्यो निष्फल इतितदंतराधीनफलतारतम्याभिव्यंजकविंशोपकानयनायैव भाव

खेटसंध्यन्तरं विंशतिघ्नंतथाभावसन्ध्यन्तराप्तंचविंशोपकाः ॥
भौमशुक्रज्ञचन्द्रार्कविद्भृग्वसृग्जीवमन्दैनिजीवाग्रहांशाधिपाः ॥ २८ ॥

सन्ध्यंतरेण विंशतिर्विंशोपकास्तदाखेटसंध्यंतरेण कतीत्याकारो दर्शितः ग्रहसंध्यन्तरं कार्यंविंशत्यागुणितं भजेत् भावसन्ध्य न्तरेणाप्तं फलं विंशोपकाः स्मृताइति अथ बलज्ञानं विनासुधियापि तत्पाककालादिकफलस्यादेष्टुमशक्यत्वेन तदर्थं ग्रहाणां वर्ग पङ्क्तं दर्शयति भौमेति भौमादयः क्रमेणमेषादिद्वादशराशिनां स्वामिनः तथा तत्तद्राशिषु तत्तद्राशिसंज्ञकनवांशानामपि प्रति राशिनवनवनवांशाः मेषादिसर्वराशिषु अष्टोत्तरशतं ते ज्ञेया इत्यर्थः ॥ २८ ॥ 

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

नवांशानयनप्रकारंदर्शयति क्रियेति मेषमृगतुलाकर्कआद्याआरंभावधयोयेषांते तथाच मेषेमेषमारभ्यवृषेमकरमारभ्यमिथुनेतुला मारभ्यकर्केकर्कमारभ्य पुनः सिंहादिचतुर्षु पुनर्धनुरादिचतुर्षुत्रिरावृत्त्यामेषादिकमारभ्यैवक्रमोनवांशगणनायाः अंतिमोनवांशोयत्र मीनसंज्ञकस्तदुत्तरमेवक्रमप्राप्तमेषादेः संभवात् इदमप्यत्रबोध्यं नवांशप्रसंगात् मेषादिराशिषुयः स्वीयोनवांशस्तस्यवर्गोत्तमसंज्ञापि तेचचरस्थिरद्विस्वभावेषुक्रमात्प्रथममध्यमांत्याः तदुक्तमाचार्यैः वर्गोत्तमाश्चरगृहादिषुपूर्वमध्यपर्यंतगाः शुभफलानवभागसंज्ञा इ ति एतेषांवर्गोत्तमत्वस्यार्थसिद्धत्वात्पृथगनुक्तावपिनन्यूनतेति अथोच्चराशीनांवर्गषट्कानंतर्भावेपि प्रसंगादुपयुक्तत्वाच्चतानपिनिरूप

क्रियमगघटककार्द्यानवांशाअथोच्चान्यजवृषमृगकन्याःकर्कमीनौघटोर्कात् ॥ दशभिरथगुणैरष्टाक्षिभिः पञ्चचन्द्रैरिषुभिरुडुभिरंशैःसाक्षिभिस्तेस्तनीचाः ॥ २९ ॥तुंगंयुगंजगुरगोर्गृहमस्यकन्यांकोदण्डमण्डजमि होच्चगृहेतुकेतोः ॥ तुंगंक्वचितत्वलिमगोःशिखिनश्चकुम्भं होरेसमेब्जभगयोर्विषमेर्कविध्वोः ॥ ३० ॥

यति अथोच्चानीति अर्कात् अर्कमारभ्यशन्यंतानांसप्तानांमेषाद्याउच्चराशयोज्ञेयाः तत्रैवतेषांपरमोच्चांशानप्याह दशभिरित्यादि पूर्व वत्क्रमः अथ क्रमप्राप्तान्सूर्यदीनांनीचराशींस्तदंशांश्चसूचयति तेस्तनीचाइति अस्तनीचाः मेषवृषमकरादितः स्वस्वसप्तमराशय स्तुलालिककर्कादयस्तेसूर्यादीनांनीचाःनीचांशाअप्युच्चेषूक्ताएवज्ञेयाइति ॥ २९ ॥ अथराहुकेत्वोरप्युच्चनीचगृहान्दर्शयति तुंगमिति अ गोराहोस्तुंगमुच्चं युगं मिथुनराशिंजगुराचार्याः युग्मंतुयुगलंयुगमिति तथा युगंयुग्मेकृतादिष्वति युगशब्दोद्वंद्वपरःवस्तुतोत्र युग

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

सं॰नि॰

॥१६॥

शब्दस्यसंदिग्धार्थत्वेननिर्णायकन्यायापेक्षायां गौरवात् तुंगंगुजर्युंगलमृक्षमगोश्वकन्यामितिपाठ उचितः अस्यकन्यांगृहंजगुः । एवं
कोदंडंधनुः अंडजंमीनं केतोरुच्चगृहेक्रमेणाहुः मिथुनेतमसः शिखिनोधनुषिप्रथमेबुधभेगुरुभेभवनमित्यन्यैरप्युक्तम् ॥ क्वचित् यावने
अगोरलिं वृश्चिकमुच्चं शिखिनः केतोः कुंभमुच्चमाहुः सूर्येन्दूपरिधिर्जीवधूमज्ञार्क्यगवः क्रमात् शक्रचापासृजौकेतुः शुक्रश्चोच्चाअजा
दिष्वतिवचनात् एवमुच्चात्सप्तमंनीचमपि अथहोराख्यंवर्गंनिरूपयति होरेइतिहोराराश्यर्द्धमुच्यतेइतिप्रसिद्धत्वात्तत्स्वरूपमनुक्त्वैव
स्थानमाह समेइति समेसमराशौअब्जभगयोश्चंद्रसूर्ययोः प्रथमतश्चंद्रस्यततः सूयस्यहोरेत्यर्थः भगंश्रीकाममाहात्म्यवीर्ययत्नार्ककी

दृकाणपाःस्युःस्वसुताङ्कनाथाउक्तानवांशाः स्वभतोर्कभागाः ॥
ओजेशराक्षाष्टनगेषवांस्त्रिशांशाःकुजार्कीज्यकवित्सितानाम् ॥ ३१ ॥

र्तिष्वितिकोशात् भगंश्रीयोनिवीर्येच्छेत्यारभ्यधर्मेमोक्षेऽथनारवावितिमेदिनीअतश्चभगशब्देनसूर्यउच्यतेविषमेविषमराशौ अर्के
विधोः प्रथमतः सूर्यस्यततश्चंद्रस्य अत्र होरापदेन लग्नहोरा अपि व्यर्कतन्वंशतिथ्यंशोभुक्तहोराः स्ववारात् षष्ठषष्ठस्यज्ञेयाः तदुक्तं
तत्कालार्कन्यूनलग्नांशापिंडोभक्तःपंचक्षोणिभिर्भुक्तहोराः भास्वच्छुक्रज्ञेन्दुसौरार्यभौमाःसंख्यायेरन्नवारतस्तत्तदीशाइति ॥ ३० ॥
अथद्रेष्काणेशान् दर्शयति दृकाणपा इति राशित्रिभागोद्रेष्काण इति प्रसिद्धेर्दशभिर्दशभिरंशैरेको द्रेष्काण इति बोध्यं तदीशाः
स्वसुतांकनाथाः तथाहि प्रथमः स्वस्यतद्राशिस्वामिनः द्वितीयस्तत्पंचमस्वामिनःतृतीयस्तन्नवमेशस्य यथा मेषे प्रथमो मेषस्य त

CC-0.Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

सटी॰

सं॰ १

॥१६॥

त्स्वामी भौमः द्वितीयः सिंहस्यतत्स्वामी सूर्यः तृतीयो धनुषस्तत्स्वामी जीवः एवं वृषादौ नवांशाः प्राङ्गनिरूपिताः द्वादशांशा नाह स्वभत इति सार्द्धांशद्वयेन एकोद्वादशांशो भवति तेच स्वभतः स्वराशितः द्वादशांशाः स्वभात्स्मृता इत्युक्तेः यथामेषरा शौ मेषत आरभ्यमीनांताः वृषे वृषमारभ्य मेषांताः एवमग्रे राशिस्वामिन एव तत्तद्द्वादशांशपाः त्रिंशांशानाह ओजे इति ओजे मेषमिथुनादिविषमराशौ कुजार्कीज्यकवित्सितानाम् भौमशनिगुरुबुधशुक्राणां इज्यक इति स्वार्थेकः वस्तुतः कुजार्क्यार्चितवि त्सितानामिति पाठो युक्तः शराक्षाष्टनगेषवोंशाः क्रमात् शराः पंच भौमस्य ततोक्षाणि पंच शनेः ततोष्टौ गुरोः ततो नगाः सप्त विदः

समेन्यथोक्तादितिवर्गषट्कं जीवोगुरुर्ज्ञौज्ञसितौविसूर्य्याः ॥
व्याराज्ञजीवैर्निकुजाविभौमैंर्द्विनारवेःस्युः सुहृदोरयोन्ये ॥ ३२ ॥

ततः पंचभृगोरित्योजेक्रमः ॥ ३१ ॥ समराशौतानाह समेन्यथेति उक्तात् उक्तक्रमात्त समे वृषादिराशावन्यथा तथाहि वृषकर्कादि समराशौ पंचसप्ताष्टपंचपंचमिताः सितज्ञेज्यशनिकुजानामिति ग्रहेष्वंशेषुच वैपरीत्यं बोध्यमिति वर्गषट्कंज्ञेयमितिशेषः अथ फलक थनोपयोगिसौहृदं निरूपयति जीवइति स्वौरिति ल्यबलोपे पंचमी रविमारभ्य रव्यादिक्रमेण तथाच रव्यादीनां विभक्तंचतपदोपस्था प्याजीवादयः क्रमेण सुहृदोज्ञेयाः जीवोजीवबुधौसितेंदुतनयौव्यर्कांविभौमाःक्रमाद्वीन्द्वर्कांविकुजेंद्विनाश्च सुहृद इत्याचार्यो क्तेः इदं सौहृदं निसर्गात् स्वाभाविकं मित्रत्वमित्यर्थः स्वरूपंच स्वभावश्च निसर्गश्चेत्यमरः अन्ये उक्तेभ्योभिन्नास्तु तत्तद्ग्रहस्यारयः



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

शत्रवइत्यर्थः ॥ ३२ ॥ वास्तवं सर्वाभिमतं शत्रुत्वमित्रत्वादिकं निरूपयति रवेरित्यादिभिस्त्रिभिः स्पष्टार्थाः श्लोकाः सुहृत्त्वमित्यु पलक्षणं शत्रुत्वसमत्वयोरपि तदुक्तं सत्योक्तेसुहृदस्त्रिकोणभवनात्स्वात्स्वान्त्यधीधर्मपाः स्वोच्चायुःसुखपाः स्वलक्षणविधेर्ना न्ये विरोधादिति सत्योक्ते सत्याचार्योक्ते शास्त्र इत्यर्थः ॥ ३३ अन्यः शनैश्चरः उक्तेभ्यः सूर्यचंद्रभौमबुधशुक्रेभ्यस्तस्यैवात्रा

रिपूरवेर्मंदसितौसमोज्ञोभौमेज्यचन्द्राः सुहृदोनिसर्गात् ॥ चन्द्रस्यमित्रेज्ञरवीसमाःस्युः सर्वेपरेथासृजइ न्द्विनेज्याः ॥ ३३ ॥ मित्राण्यरिज्ञश्चसमौसितैनीमित्रेर्कशुक्रौचविदोरिरिन्दुः ॥ समाःपरेच्चर्यस्यरवीन्दु भौमा मित्राणिशत्रूज्ञसितौसमोन्यः ॥ ३४ ॥ सितस्यमित्रेज्ञशनीकुजेज्यौसमौरवींदूचरिपूतथार्कः ॥ मित्रेज्ञशुक्रौधिषणःसमोन्येरयश्चसत्योक्तमिदंसुहृत्त्वम् ॥ ३५ ॥ सुहृद्ग्रहस्योभयतोग्रहत्रयेस्थितोग्रहस्त त्समयेत्रमित्रता ॥ स्वभोच्चमित्रेष्टशुभर्क्षगःशुभोन्त्यजुत्रिकार्याहिकुयोगगोऽशुभः ॥ ३६ ॥

न्यत्वात् ॥ ३४ ॥ सत्योक्तं सत्याचार्योक्तमित्यर्थः ॥ ३५ ॥ तात्कालिकं मित्रत्वादिकं लघुनोपायेन दर्शयति सुहृदिति यस्य ग्रहस्य तत्कालमित्रादिज्ञानमपेक्षितम् अस्य ग्रहस्येदानीं को मित्रं कः शत्रुः समोवेतिजिज्ञासायामिति यावत् तस्य ग्रहस्य यत्र कुत्र स्थितस्य उभयतः गृहत्रये व्ययैकादशदशमान्यतमात्मके धनसहजचतुर्थान्यतमे च स्थितो ग्रहस्तस्य तत्काले मित्रं

CC-0. Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

स्यात् अन्य गृहस्थितः शत्रुः एकत्र शत्रुरेकत्र मित्रंचेत्सम इत्यपि ज्ञेयं ग्रहाणां शुभत्वाशुभत्वज्ञापकधर्मानाह स्वभोच्चेति स्वभे स्वराशौ स्वोच्चे स्वमित्रगृहे इष्टशुभर्क्षगः त्रिकार्यादिभिन्नोयः शुभग्रहस्यराशिः पापानाक्रांतत्रिकोणभवानादिरूपोवा इष्टंयत् शुभर्क्षं बलवत्सौम्यग्रहराशिरितिवा तथाच स्वभोच्चमित्रेष्टशुभराशिगोऽशुभोपिशुभः एवमनृजुत्रिकार्यादिकुयोगगः शुभोप्यशुभः अनृजु इति भावप्रधानो निर्देशः त्रिकं षष्ठाष्टमव्ययाख्यम् आर्यादिशत्रुभास्तर्क्षादि आदिपदान्नीचनिर्बलत्वादि कुयोगः पापग्रहसंबंधा दिः तंप्राप्तोग्रहः शुभोप्यसत्फलोऽशुभ इत्यर्थः ॥ ३६ ॥ ग्रहाणामुच्चनीचर्क्षस्थत्वादिप्रयुक्तमन्वर्थसंज्ञांतरं दर्शयति उच्चेदीप्त

उच्चेदीप्तः स्वस्थउक्तः स्वराशौ हृष्टोमित्रर्क्षे च शान्तः सुवर्गे ॥
शस्तोदीप्तांशुर्विलुप्तोस्तखेटोनीचे दीनः पीडितोभेखलार्योः ॥ ३७ ॥

इति उच्चे उच्चराश्यंशेदीप्तः स्वराशौ स्वस्थः एकाग्रोऽव्याकुलोऽविक्षिप्त इति यावत् मित्रर्क्षेहृष्टः प्रसन्नः सुवर्गे शोभनवर्गेशांतः दीप्तांशुःदीप्तकिरणः शस्तः श्रेष्ठः अस्तखेटोऽस्तग्रहो विलुप्तः नीचेनीचराश्यंशेदीनः खलार्योर्भे पापराशौशत्रुराशौच पापारिभ्यामाक्रांतराशौ वा स्थितोग्रहः पीडितः स्यादित्यर्थः अत्रोपयुक्तसंज्ञांतराण्यपि ग्रहाणां—खेटोगर्वित उक्त उच्च गृहगो मूलत्रिकोणेथवा मित्रर्क्षे मुदितोथवा गुरुयुतोवा मित्रयुक्तेक्षितः ॥ पुत्रस्थानगतोगुभौमरविजार्कैः संयुतो लज्जितः पापारिग्रहवीक्षितोथ रविणा युक्तश्च संक्षोभितः ॥ योमंदारियुतेक्षितोरिभगतोऽसौस्यात्क्षुधापीडितो यः पापारियुतेक्षितो नच शुभैर्दृष्टस्तृषार्तोबुभे ॥ एते प्रति

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

श्लोकपादमेकैकोभावः तेच षट् तत्रगर्वितमुदितौभावपुष्टिकरौ क्षोभितक्षुधितौ नाशकौ तत्रापि कर्मणि क्षुधितक्षोभिततृषित लज्जितान्यतमश्चेद्दारिद्र्यमवश्यं लज्जितः पुत्रभावगः पुत्रनाशकरः क्षोभितः क्षुधितो यस्य सप्तमे स्त्री न जीवतीति ॥ ३७ ॥ अथैतत्संज्ञानिरूपणप्रयोजनमाह संज्ञानुरूपाणीति यादृशीग्रहस्यैवंरीत्यासंज्ञांनिष्पन्नातदनुरूपमेवफलं सदसत्फलस्य दार्ढ्यशैथि ल्येउत्कर्षापकर्षौ महत्त्वाल्पत्वेचबलानुसारेणबुधैर्ज्ञेये । तथातत्रोपयुक्तंसंज्ञांतरमाह बालइति रसांशैः षड्भिः षड्भिरंशैः असमे मेष

सञ्ज्ञानुरूपाणि फलानि चैषां बलानुसारात्फलतारतम्यम्॥बालःकुमारोयुववृद्धनष्टाः क्रमाद्रसांशैरसमे समेन्यत् ॥ ३८ ॥ चापान्त्यमेणाद्यमजोक्षसिंहाश्चतुष्पदाः कर्कझषौ मृगान्त्यम् ॥ जलेचराःकौर्प्पिरलिर्नं रास्तु चापादिमंस्त्रीधटयुग्मकुम्भाः ॥ ३९ ॥

मिथुनादिराशौक्रमेणबाल्याद्यवस्थाप्रयुक्ताबालादिसंज्ञा प्रथमंषड्भिरंशैर्विषमराशौ ग्रहो बालः ततः षड्भिःकुमारः ततो युवा ततो वृद्ध स्ततोनष्टोमृतइति समेवृषादिराशौत्वन्यत्ववैपरीत्येनैताः संज्ञाः ज्ञेयाः तथाहि वृषादौ समभे प्रथमंषड्भिरंशैर्नष्टः ततोवृद्धः ततोयु वा ततः कुमारः ततोबाल इति एतासु कुमारयुवसंज्ञे श्रेष्ठतमे वृद्धोनिंद्यः नष्टोनिंद्यतमः बालस्त्वर्द्धफलइति ॥ ३८ ॥ सर्वत्रप्रसिद्ध संज्ञांतरं दर्शयति चापान्त्यमिति चापस्य धनूराशेः अंत्यपंचदशभागेभ्योऽग्रिमाअंतिमाः पंचदशभागा एणस्य मृगस्य मकर



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

राशेः आद्यमर्द्धं मेषः उक्षा वृषराशिः सिंहश्चैतेचतुष्पदराशयः एवं कर्कझषौ कर्कमीनौ मृगांत्यंच एतेजलेचराः कौर्पिर्वृश्चि
कोऽलिर्वृश्चिकाकारएवाकाशे दृश्यते इत्यर्थः नराः नरराशयस्तु चापादिमं धनुष आद्यमर्द्धं कन्यातुलामिथुनकुम्भाः सार्द्धाश्चत्वारो
राशयः इत्यर्थः नामानुरूपेणैवस्वामिभृत्यभावमेलापकपशुजलादिक्रियासूपयोगआसामिति ॥ ३९ ॥ निशाबलादिराशी
नाह चत्वार इति अजाद्या मेषाद्याश्चत्वारो राशयः सैणचापाः एणचापाभ्यां मकरधनुर्भ्यां सहिताः षड्राशयोनिशाबलाज्ञेयाः अर्था

चत्वारोराशयोजाद्याःसैणचापानिशाबलाः ॥
पृष्ठेनोद्यन्त्ययुग्मास्ते शीर्ष्णान्येद्व्युदयोझषः ॥ ४० ॥

दन्येषड्राशयः सिंहकन्यातुलालिकुंभमीनादिनबला इति पृष्ठोदयादिसंज्ञकराशीनाह ते इति ते निशाबलाराशयोऽयुग्माः मि
थुनंविना मेषवृषकर्कधनुर्मकराः पंचपृष्ठोदयसंज्ञकाराशयः अन्ये सर्वेऽमीना मीनंविनामिथुनसिंहकन्यातुलालिकुंभाः षड् शीर्ष्णा
शीर्षोदया इत्यर्थः झषो मीनराशिस्तुद्व्युदयः मीनस्य मत्स्यद्वयघटितत्वेनयुगपदेव मुखपुच्छाभ्यामुदयाविरोधादिति भावः अत्रग्रहा
दौसंकेतविशेषोपि सूर्येन्दूपरिधिर्जीवधूमज्ञशनिकेतवः ॥ शक्रचापः कुजोऽगुश्चशुक्रश्चोच्चाअजादितः ॥ राहुजीवभृगुज्ञास्तुग्रहाःस्युर्म

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

स्तकोदयाः ॥ अर्कांगारकमंदाख्या ग्रहाः पृष्ठोदयाः स्मृता इत्यादिः ॥ ४० ॥ लग्नादिभावानामदृश्यादिसंज्ञांतराण्याह तनो रिति तनोर्लग्नस्ययेभोग्यांशास्तानारभ्य द्युनभस्य सप्तमभावस्यपष्टस्य ये गतभागा भुक्तांशास्तत्पर्यंतमखिलमशीत्युत्तरशतमंशाः भचक्रस्य अदृश्यार्द्धमुच्यते तदेव अनुदितसंज्ञकमपिकथ्यते अपरं सप्तमभावभोग्यांशानारभ्यलग्नभुक्तांशपर्यंतमशीत्युत्तरशतमंशा भचक्रस्य दृश्यार्द्धसंज्ञमुदिताख्यंचोच्यते एवं तथा पूर्वार्द्धाख्यंभवतिखंडंयत् खतः दशमस्यभोग्यांशानारभ्यचतुर्थभावस्यभुक्तां शपर्यंतमशीत्युत्तरशतमंशाः पूर्वार्द्धसंज्ञंखंडंज्ञेयम् एवं तुरीयात् स्वाधोदेशावच्छिन्नक्रांतिवृत्तप्रदेशात् तुरीयभोग्यांशानारभ्येत्यर्थः

तनोर्भोग्यांशाद्यंद्युनभगतभागान्तमखिलं ह्यदृश्यार्द्धंलोकेनुदितमुदितं दृश्यमपरम् ॥
तथापूर्वार्द्धाख्यं खतइहतुरीयांतमपरन्तुरीयात्खान्तं स्याद्भवनलवभेदोगदितवत् ॥ ४१ ॥

खान्तम् स्पष्टीकृतदशमभुक्तांकपर्यंतमुत्तरार्द्धंभचक्रस्यज्ञेयम् अत्रानुक्तमपिस्पष्टयति भवनेति भवनस्य भावस्य लवभेदः भुक्त भोग्यांशादिविशेषः गदितवत् उक्तवत् यथा दृश्यादृश्यार्द्धादौभुक्तभोग्यांशादिकल्पना एवमत्रापीत्यर्थः एवमत्रानुक्ता अपि चर स्थिरद्विस्वभावादिसंज्ञामेषादीनां तथा क्रूराक्रूरे विषमसमे पुंस्त्रीसंज्ञेचक्रमात्तन्नेयेतथासिंहोवृषः प्रथमषष्ठहयांगतौलिकुम्भास्त्रिको णभवनानिभवंति सूर्यादितिमूलत्रिकोणसंज्ञापि तथा जलचरपशुनरकीटावन्यौमानेतनौमदेवापि क्रमशोभवंतिबलिनोविगतबला





CC-0.Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

सूर्य

उक्तसतमगाइति तथा सहजारिकर्मलाभाउपचयाख्याः तथा नरपशुकीटादिनरात्रिसंध्यासुक्रमाद्बलिनः एवं ग्रहाणामप्यत्रानुक्तं स्वभावादिकं ग्रंथांतराद्यद्यदुपयोगिज्ञेयं तथाहि रविचंद्रौनृपौ नेता कुजः सौम्यः कुमारकः ॥ शक्रेंद्रपूज्यौसचिवौ प्रेष्यो मन्दोगुरंत्यज इति ज्ञातएतेषांबलेतद्वृत्तिमान् बालोवाच्य इति तथा ॥ आत्मारविः शीतकरोमनस्तुसत्त्वंकुजोभाषणमब्जसूनुः ॥ वाचांपतिर्ज्ञानसुखे मदेशः शुक्रोभवेदर्कसुतस्तुदुःखमित्यपि तथा नरग्रहाभानुकुजेज्याः नपुंसकौबुधशनी युवत्यौशुक्रेंदू तथादेवाम्बुवह्निविहारकोश शयनक्षित्युत्करेशाः सूर्यादयः तथाऽस्थिरक्तमज्जात्वग्वसाशुक्रस्नायवः क्रमाद्धातवः तत्ररंध्रस्थधातुकोपान्मरणादिकमपि तथा पित्तंतुभानुः सम्गात्रयष्टिः प्रतापयुक् सत्त्वगुणोल्परोषः ॥ संचारयुक् संकुचितार्थवाक्यः स्वल्पप्रदोदैविकबुद्धियुक्तः १ चंद्रः सितांगः समगात्रयष्टिर्वाग्ग्मी परिष्वंगविवेकयुक्तः ॥ क्वचित्कृशःशीतलवाक्ययुक्तः सत्त्वाश्रयोवातकफानिलात्मा २ कोपा ग्निनेत्रः सितरक्तगात्रः पित्तात्मकश्चंचलबुद्धियुक्तः ॥ कृशांगकस्तामसधीरधीरोभौमः प्रतापी रतिकेलिलोलः ३ दूर्वानिभः सोमसुतो थ विद्वान् रजोगुणी प्रस्तुतवाक्यजालः ॥ हास्यप्रियः पित्तकफानिलात्मा सद्यःप्रवासी समपुंश्चलश्च ४ बृहस्पतिस्तुंदिलगात्रयष्टिः कफात्मकः श्रेष्ठमतिः सुविद्वान् ॥ सत्त्वाश्रयः सर्वगुणाभिरामः पिंगाक्षिमूर्द्धन्यकचाभिरामः ५ सुलोचनश्चास्फुजिदात्तकामः सुखीबली सुन्दरकान्तगात्रः ॥ आनीलवर्णांकितरोमयुक्तोरजोगुणः सर्वगुणाभिरामः ६ जालमस्तुमन्दः कृशदीर्घगात्रः पिंगेक्षणः क्रूरकचाभिरामः ॥ स्थूलद्विजस्तामसबुद्धियुक्तो वातात्मको वाक्कठिनश्चनिंद्यः ७ ग्रहौजसा कर्मफलंच वाच्यं विप्रोगुरुर्भौमरवीनृपा

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

 

लौ ॥ वैश्यौ बुधेन्दू रविजश्चशूद्रोंत्यौराहुकेतू शनिजोन्यजातिरित्यपि ८ एतत्सर्वं सुधियागुरूपदेशादिनास्वबुद्ध्याच विमृश्यजात कस्य प्रश्नस्यफलं वाच्यमिति ॥ ४१ ॥ इदानीं संज्ञासंज्ञकप्रथमसंकेतसमाप्तिं श्लोकेनोपनिबध्नाति निजाग्रजातेति निजस्य स्वस्य योऽग्रजातः ज्येष्ठसहोदरः श्रीवजीरचंद्रशर्मा तस्यात्मजः श्रीघासीरामशर्मा सएव स्वभ्रातृज इत्यर्थः तस्य कृते एतच्छास्त्रीयव्युत्पत्तिसिद्ध्यर्थं कृते निर्मिते संकेतनिधौ एतन्नामकेस्मिन् ग्रंथे श्रीरामदयालुनाम्ना ज्योतिर्विदा ज्योतींषि ग्रहनक्षत्रादीनि तद्वर्णाकारादीनिच तान्यनुसृत्यलोकानां यत्पूर्वजन्मसंपादितपुण्यापुण्यकर्मपरिपाकरूपसुखदुःखेष्टानिष्टादिप्रतिपादकतया प्रकाशकं

निजाग्रजातात्मजघासिरामकृते हि संकेतनिधौ कृतेऽस्मिन् ॥ ज्योतिर्विदारामदयालुनाम्ना संज्ञाख्य
सङ्केतइतः समाप्तिम् ॥४२॥ प्रथमः संकेतः ॥१॥ ओजभे च विषमांशकोपगैरंगजीवविधुभास्करैर्नरः ॥
स्यात्तुतैरिहसमांशकोपगैः स्त्रीनिषेकसमये प्रसूतिषु ॥ १ ॥

शास्त्रमपिस्वस्वादृष्टवशाततत्कालीनग्रहदृष्ट्यादिसंबंधपरंपराप्रयोज्यशुभाशुभव्यंजकत्वात्ज्योतिःशब्दार्थःतच्छास्त्रं गुरुपरंपरया श्रीसूर्यानुग्रहाच्च वेत्तीति ज्योतिर्वित् यद्वा ज्योतींषि ग्रहर्क्षादीनि गोलगणितादियथार्थज्ञानपूर्वकं सम्यग्वेत्तीति ज्योतिर्वित् तेन कृते संज्ञासंज्ञकः प्रथमसंकेतः समाप्तिम् इतः प्राप्तो गत इत्यर्थः ॥ ४२ ॥ इतिसंकेतनिधिव्याख्यायां रामदत्ताविष्कृतायां संज्ञासंकेतव्याख्यानं समाप्तम् ॥ अथ द्वितीयसंकेते जातकाद्युपयोगियोगादेरिष्टानिष्टतत्तत्फलप्रयोजकतया निरूपयिष्य



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

माणत्वेन तदर्थं निषेकलग्नादिद्वारा तच्छुद्धयनुमापकं लिङ्गंदर्शयति ओजभेचेति निषेकसमये आधानकाले ओजभे स्वोदयक्षितिजे विषमे मेषमिथुनादिराशावुदिते तत्रैव विषमनवांशस्थैः अंगजीवविधुभास्करैः लग्नगुरुचंद्रसूर्यैः सद्भिः प्रसूतिषु तदानरोवाच्यः बालकस्य जन्मवाच्यमित्यर्थः यदातैर्लग्नार्केंदुजीवैः समराशिनवांशस्थैः तदा प्रसूतिषु स्त्री कन्याजाता वाच्या एवं प्रश्नेपि अत्रेदमपि–यद्भावाह्लाभसप्तांकतृतीयात्मजगे गुरौ ॥ तदब्देगर्भयोगःस्यान्नान्यदब्दे कदाचनेति ज्ञेयम् किंच दंपत्योर्वर्णमात्रांकाः पिण्डीकृत्वा त्रिभिर्हताः॥ अष्टभिर्विहृताः शेषे समे स्त्री विषमे पुमानिति ॥१॥ गर्भगतस्य शिशोः कस्मिन् राशौ चंद्रे स्थिते सति प्रसूति

प्रश्नकालेतुयद्भे विधुः स्यात्ततः पञ्चमंजन्मभंतद्वदिन्द्वंशतः ॥
सप्तमर्क्षंचवाप्रश्नलग्नांशपर्क्षं प्रयाते विधौ स्यात् प्रसूतिः स्फुटम् ॥ २ ॥

र्वाच्येति जिज्ञासायामाह प्रश्नकालेत्विति प्रश्नकाले इत्युपलक्षणं निषेककालादेरपि तथाच प्रश्ननिषेकादौ यद्राशौविधुर्वर्त्तते ततः पंचमः सप्तमोवाराशिर्जन्मराशिर्वक्तव्यः तद्वदिंद्वंशतः तत्रैव यद्राशिनवांशे चंद्रोवर्त्तते ततोपि पंचमः सप्तमो वा राशिर्जन्मकालेराशिर्नवांशराशिर्वावाच्यः वस्तुतस्तु प्रश्नलग्नांशपर्क्षं प्रयातेविधौ प्रश्ननिषेकान्यतमेबलवति लग्ने वर्त्तमाना ये नवांशसप्तमांशद्वादशांशत्रिंशाशास्तन्मध्ये योबली तदधिपोयो ग्रहस्तद्राशिस्थिते चंद्रे त्ववश्यं प्रसूतिः स्यादितिवाच्यामित्यर्थः ॥ २ ॥

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

गर्भेशिशुद्वययोगंदर्शयति चतुरंघ्रीति तत्रैवचतुरंघ्रिभानि चापांत्यमेणाद्यमजोक्षसिंहाझ्रतिप्रागुक्ताश्चतुष्पदराशयस्तेष्वन्यतमराशि स्थे सूर्ये परैः शेषैश्चंद्रादिभिर्द्वितनुस्थैर्द्विस्वभावराशिस्थैर्बलशालिभिश्चसद्भिर्गर्भे शिशुद्वयं वाच्यं जातस्य जाड्ययोगमाह शुभदृगिति खलखेटैः पापग्रहैः शुभग्रहदृष्टिरहितैः पुनः सन्धिगैः भावसन्धिसमराश्यादिस्थैः पुनः उडुपान्वितैः चंद्रसमन्वितैः

चतुरङ्घ्रिभगेरवौपरैर्द्वितनुस्थैर्बलिभिःशिशुद्वयम् ॥ शुभदृग्रहितैश्चसन्धिगैः खलखेटैरुडुपान्विते
र्जडः ॥३॥ विधुभालिझषान्तगैःखलैः खलदृष्टे गविचन्द्रमस्यवाक् ॥ मृगराजगतौविधूष्णगू इहम
न्दारदृशादृशःक्षयः ॥ ४ ॥

सद्भिर्जातो बालो जडो ज्ञेय इत्यर्थः ॥ ३ ॥ अथ मूकतायोगः विधुभेति प्रश्ने जन्मनिवा विधुभालिझषांत्यगैः कर्कालिमीनांत्य भागस्थैः खलैः पापग्रहैः स्वोच्चस्थेपि चंद्रमसि खलैर्दृष्टे सति शिशुरवाक् मूको भवतीत्यर्थः दृष्टिनाशयोगमाह मृगराजेति विधू ष्णगू चंद्रार्कौ सिंहराशिगौ चेत् इह मंदारदृशा तत्र मंदाराभ्यां शनिभौमाभ्यां क्रूरदृशा दृष्टौच तदा जातस्य शिशोर्दृशः दृष्टेः



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

क्षयो नाशोवाच्यः विधूष्णगू इहेत्यत्र ईदूदेद्विवचनंप्रगृह्यमिति प्रगृह्यसंज्ञायां प्रकृत्या सत्त्वमिति ॥ ४ ॥ पितुरनिष्टयोगमाह खलाइति खलाः पापाः खलराशिस्थाएव रवेः नवमपंचमसप्तमस्थानगायदिस्युस्तदाऽस्यशिशोः पिता जन्मसमये अर्कभतुल्यदेशे चरस्थिरद्विस्वभावजलस्थलपर्वतवनपुराद्यन्यतमदेशे तत्तद्राशिसंबंधिनि पूर्वादौ यद्वा चरे देशांतरे स्थिरे स्वदेशे द्विस्वभावे मार्गमध्ये बद्धोवाच्यः परोक्षे पितरिजन्मयोगः तनुमिति यदि चरमांशसंधिगोविधुर्जन्मलग्नं नपश्येत्तदा परोक्षस्य

खलाःखलर्क्षेंङ्कसुतास्तगारवेः पितास्यबद्धोर्कभतुल्यदेशके ॥ तनुं न पश्येच्चरमांशसन्धिगो विधुः परोक्षस्य पितुस्तदासुतः ॥ ५ ॥ नचाङ्गदर्शीन्दुरथज्ञशुक्रयोः समध्यगोस्तेचकुजेयमेतनौ ॥ पितुःपरोक्षस्यसुतोद्भवस्तथा पितर्य्यतीतेस्रद्दशार्कशुक्रयोः ॥ ६ ॥

पितुः पुत्रोत्पत्तिरादेश्येत्यर्थः ॥ ५ ॥ अत्रैव योगांतरमाह नचेति यदा चंद्रोलग्नं नपश्यति तथा ज्ञशुक्रयोर्मध्ये वर्त्तमानः स्यात तथा सप्तमेभौमे यमे लग्नस्थेच सति तदापि परोक्षस्य पितुः पुत्रोत्पत्तिर्वाच्या पुनर्योगांतरं पितरीति अस्रदृशा मंगलेन क्रूरदृशा दृष्टयोः अर्कशुक्रयोस्त्रिकादिन्दुस्थानस्थयोरेकस्थयोश्चसतोः पितरि अतीते अतीतकल्पे वा शिशोर्जन्मवाच्यमिति अस्रदृ

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

शेति विशेषणेतृतीया ॥ ६ ॥ पुनः पितर्येव विशेषमाह चरर्क्षगाविति चरर्क्षगौचरराशिस्थौ दशमत्रिकान्यतमस्थौ उच्चस्वक्षेत्रा
दिव्यतिरिक्तस्थौ सूर्यशुक्रौ भौमेन युतौ दृष्टौवा तदा शिशोः पिता जन्मतः प्रागेव मृतोवाच्य इति पितृरोगयोगमाह व्ययेति
बालस्य जन्मलग्नतः व्ययाष्टमस्थौ पापग्रहावुभयत्रचेद्भवतः लग्नेशबलरहितेंकभूस्थे नवमचतुर्थस्थेच सति तदातत्पितातिरोग
वान् वाच्य इत्यर्थः ॥ ७ ॥ पुनरनिष्टयोगांतराण्याह इंदोरिति निशिरात्रौ जन्म चंद्रात्त्रिकोणे पापयुक्तः शनिश्चेत् तदा मातृ

चरर्क्षगौभौमयुतेक्षितौच चेदर्कशुक्रौजनकोमृतःप्राक् ॥ व्ययाष्टमस्थौचखलौबलोनेङ्गेशेङ्कभूस्थे च पि
तातिरोगी ॥ ७ ॥ इन्दोस्त्रिकोणइनजोनिशिमातृहन्ता पापान्वितोथदिवसे भृगुजात्तथारः ॥ सारे शनौ
चरभगे निशिजातबालतातः पुरैवविषयान्तरगोमृतः स्यात् ॥ ८ ॥ मन्दाराभ्यां यदिच सहितोर्कस्त
दाजन्मतःप्राक् तातोवृत्तस्तनुमृतिमदाय्यंत्यगैःस्त्रीतुपापैः ॥ इन्दोर्भाग्यास्तमृतिषुखलैः साम्बबालक्षयो
ङ्गाद्वाम्बाजीविव्ययरिपुगतैस्तैः सुतोष्टाद्यगस्थैः ॥ ९ ॥

हानिर्वाच्याएवंदिवसेजन्म शुक्रात्त्रिकोणेपापयुक्तोभौमश्चेत्तदापिमातृहानिः एवं सारे सभौमेशनौचरराशिस्थेसति निशि रात्रौजा
तस्यबालस्यतातः पुरैव जन्मतः प्रागेव देशांतरे स्थितो मृतः स्यादितिवाच्यं बलाबलंविचार्येतिज्ञेयम् ॥८॥ मंदाराभ्यामिति शनिभौ
माभ्यांसहितोर्कश्चरराशिस्थश्चेत्तदापिजन्मतः प्रागेवतातो वृत्तः अतीतोमृतइति यावत वृत्तंपद्येचरित्रेत्रिष्वतीते इतिकोशात् एवंत



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

नुसृतिमदार्यंत्यगैः पापैरुपलक्षितेलग्नेजातस्यशिशोः स्त्रीअर्थादुपस्थितस्यतातस्यैवस्त्रीबालस्यमातेतियावत सामृतावाच्येत्यर्थः
एवम् इंदोरिति इन्दोश्चंद्रात् लग्नाद्वाभाग्यास्तसृतिषु नवमसप्तमाष्टमेषुरुग्लैः पापैरुपलक्षितेलग्नेजातस्यबालस्यसाम्बस्यैवक्षयोवाच्यः
मात्रासहितस्य बालस्यनाशइत्यर्थः 'तथा लग्नाच्चंद्राद्वा व्ययरिपुगतैस्तैः पापैस्सर्वैःसद्भिः अंबामाताजीवेत अर्थाद्वालस्य मरणंस्यात्
एवं लग्नाचंद्राद्वा अष्टायगस्थैः अष्टमलग्नसप्तमस्थैः पापैरुपलक्षितेलग्नेजातः सुतोजीवेत् अर्थान्मातानजीवेत् कष्टेनजीवेद्वेति ॥ ९ ॥
अथ जन्मकालीनलग्नादिशुद्धिज्ञानोपायं निरूपयन्नुपसूतिकादीयत्तां स्पष्टयति लग्नेंदुमध्यगेति लग्नचंद्रमसोर्मध्ये यावंतो ग्र

लग्नेन्दुमध्यगखगरुपसूतिकाः स्युर्वामेबहिः स्त्रियइहान्तर वामभागे ॥
खटः शुभैः प्रियतमा अशुभैः कुनार्यो वामंचदृश्यमुदितंचतदन्यदन्यत् ॥ १० ॥

हास्तावत्य उपसूतिकावाच्याः तत्रापि विशेषमाह वामेइति वामे लग्नाद्वामभागे यावंतस्तावत्यो बहिः स्त्रियः सूतिकागाराद्बाह्या
गारे वाच्याः अवामभागे लग्नाद्दक्षिणभागे यावतस्तावत्योंतः सूतिकासमीपे सूतीगृहेवाच्या इत्यर्थः तत्रापि शुभैर्ग्रहैः शुभाः
अशुभैः पापैः कुनार्यः कुत्सिता इति वामंदक्षिणभागबोधनायाह वाममिति वामदृश्यमुदितंचेतितिस्रः संज्ञा वामस्य सप्तमभाव
भोग्यांशमारभ्य लग्नभुक्तांशपर्यंतस्य वामादिसंज्ञाज्ञेयाः तदन्यदन्यततोवामादन्यत्र लग्नभोग्यांशमारभ्य सप्तमभुक्तभागपर्यंतम्

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

अन्यत् दक्षिणमदृश्यमनुदितमिति संज्ञकं ज्ञेयमित्यर्थः ॥ १० ॥ उपसूतिकासंख्यायां विशेषमाह वक्रोच्चगैरिति लग्नचंद्रांतरालस्थैर्ग्रहैर्वक्रोच्चगैः पूर्वसिद्धाउपसूतिकासंख्या त्रिगुणाकार्या तेषु स्वराश्यंशद्रेष्काणगेषु सत्सु सासंख्या द्विगुणाकार्या तेष्वेव नीचलयगेषु नीचास्तादिदुःस्थानस्थेषु सासंख्या दलिताज्ञेया प्रकारांतरेणोपसूतिकासंख्यामाह वाजांत्ययोरिति यदि जन्मलग्नं मेषमीनयोरन्यतमं तदा हक्संख्यके द्वे स्त्रियावुपसूतिके वक्तव्ये मृगतुलालिहरिकन्यामिथुनेष्वन्यतमजन्मलग्नसत्त्वे तिस्र उपसूतिकाः

वक्रोच्चगैस्त्रिगुणिताद्विगुणाः स्वभांशदृक्केषुनीचलयगेषुतदर्द्धसङ्ख्याः ॥ वाजान्त्ययोर्मृगतुलालिहरिज्ञभेषु गोकुम्भयोरितरयोश्च दृगादिसंख्याः ॥ ११ ॥ कर्काजतौल्यलिघटैर्मृगराण्मृगाभ्यामुक्ष्णाक्माज्ज्ञगुरुभैः स्थितिरिंद्रदिक्तः ॥ प्राच्यादितः क्रियमुखाः किलराशयो द्वौ द्वौकोणगाद्वितनवश्शयनेगुवद्धा ॥ १२ ॥

गोकुंभयोस्तुचतस्रः इतरयोः कर्कधनुषोरन्यतमजन्मलग्नेपंच अत्रोक्तराशीनां बलनैर्बल्यप्रयुक्तातन्न्यूनाधिकताःपि सुधीभिर्ज्ञेया ॥ ॥ ११ ॥ गृहादौ कस्यांदिशि प्रसूतेति जिज्ञासायामाह कर्केति स्थितिरिंद्रदिक्तःइंद्रदिशं पूर्वांदिशमारभ्य प्रसूतायाः स्थितिर्वाच्या तथाहि कर्काजतौल्यलिघटैर्गृहस्य पूर्वस्यां मृगराण्मृगाभ्यां सिंहमकराभ्यां दक्षिणस्यां उक्ष्णा वृषेण वारुण्यां ज्ञगुरुभैः मिथुनकन्याधनुर्मीनैरुत्तरस्यामिति प्रकारांतरेणापि प्रसूतारियतिं दर्शयति प्राच्यादितइति मेषादितः द्वौ द्वौ राशी प्राच्यादिदिक्षु मिथु

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

नाद्या द्वितनवः कोणेषु यद्वाऽगुवत् राहुवत् यस्यांदिशि लग्नादितो राहुरस्तितस्यामपि प्रसूतास्थितिर्वाच्येत्यर्थः ॥ १२ ॥ जन्मकाले बालस्य शब्दो जातो नवेति ज्ञानायाह सरवा इति सरवे जन्मलग्ने सरवो विरवे विरव इति भावः भूमावेव प्रसूता मंचादौ वेत्याकांक्षायामाह अथ युग्मेत्यादि स्पष्टम् ॥ १३॥ अथ प्रसूताखट्वायां भग्नत्वनिम्नत्वादिविशेषमाह शीर्ष्ण इति तथा च खट्वायाः शीर्षपादौ दक्षवामौ तृतीयव्ययौक्रमात् पश्चिमौतु दक्षवामौ षष्ठनवमौ पुनस्तन्मध्यखट्वांगानि मध्यमाराशयः तत्रफलंतु पापग्रहसत्त्वे तत्रां

सरवामिथुनैणमेषगोहरयः खण्डरवौ सुताघटौ ॥ विरवा अपरेथ युग्मगो मृगकुम्भाल्यजमेषुभूमिसूः ॥ १३ ॥ शीर्ष्णोंघ्रिर्दक्षस्तृतीयंव्ययर्क्षंवामः षष्ठाङ्कौ पुनर्दक्षवामौ ॥ खट्वाङ्गेष्वेवंस्वबुद्ध्योहनीयं घातःपापैर्निम्नताभैर्विरूपैः ॥ १४ ॥ द्वारंतुकेन्द्रस्थखगैःसवीर्यैश्चेन्नैवमङ्गादपितद्वदन्ति ॥ खट्वाशिरोङ्गानितनोर्दिशिस्युस्तथांगदर्श्यंभ्रचराम्बराद्यम् ॥ १५ ॥

गे घातो भंगो वाच्यः विरूपैर्द्वंस्वादिभिर्भैः राशिभिस्तद्देशे निम्नताच ज्ञेया ॥ १४ ॥ अथप्रसूतागृहद्वारादिज्ञानायाह द्वारमिति केंद्रस्थैः सूर्यादिभिर्बलिष्ठैरेव पूर्वाद्या द्वारदिशो वाच्याः पूर्वादिस्वामिनस्तु प्रागाद्यारविशुक्रलोहिततमःसौरींदुवित्सूरयइत्युक्ताः उक्तग्रहेषु यो बलीसन् केंद्रगः स्यात्तदिशिगृहद्वारमित्यर्थः यदि बलिष्ठोग्रहः केंद्रेनस्यात्तदा कथं द्वारदिग्वाच्येत्यतआह चेन्नैवमिति

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

यदि केंद्रगोबलिष्ठग्रहोनस्यात्तदा लग्नादपि गृहद्वारं वदंत्याचार्याः तथाचतद्वचनं द्वारंवास्तुनिकेंद्रोपगाद्ग्रहादसतिवाविलग्नर्क्षादिति पूर्वादिदिग्गाशयस्तु कर्कार्जतौल्यलिघटैरित्युक्ताः यद्वामेषादिक्रमेणैव लग्नाद्द्वारंवाच्यम् तथाहि मेषसिंहधनुर्लग्नेषु पूर्वस्यां द्वारं वृषकन्यामृगेषु दक्षिणस्यां युग्मतुलाकुंभेषु वारुण्यां कर्कालिमीनेपूदीच्यामितिएवं खट्वाशिरोवयवालग्नदिशिवाच्याः एवं प्रसूता वस्त्रादिकं भोजनादिकंच बलिष्ठाल्लग्नद्रष्टुर्ग्रहात्तद्वर्णंसदसद्वावाच्यम् तदुक्तं वस्त्रं स्थूलमभुक्तमग्निकहतं मध्यं दृढं स्फाटितमित्यादि ताम्रंस्यान्मणीत्याद्यपि ॥ १५ ॥ प्रसूतागृहे दीपतैलवर्त्यादौविशेषं सूचयति स्नेह इति वर्तिस्नेहयोर्विशेषमग्रिमश्लोके स्पष्टीकरिष्यति

स्नेहोविधोर्दिनकृतस्तु भवेत् प्रदीपो वर्त्तिस्तनोरिति विचार्यमिदंविशेषात् ॥
खट्वांगके भवति यत्ररविश्चरर्क्षे दीपश्चलः करगतः स्थिरभेस्थिरःस्यात् ॥ १६ ॥

दिनकृतः सूर्याद्दीपोवाच्यः कथं तदाह खट्वांगकइति यत्रखट्वांगे तद्दिशि सूर्यश्चरराशिगश्चेत्तदा दीपश्चलोज्ञेयः चलत्वं विवृण्वन् प्रयोजकंनिर्दिशति करगत इतिस्थिरराशौ रविश्चेत् तत्रांगे दीपोपि स्थिरोज्ञेय इति इदमपिबोध्यं सूर्यस्योच्चनीचादिप्रयुक्तबल तारतम्यादौ दीपस्याप्युत्तममध्यमाधमत्वं तथा लग्नात्सूर्यदिश्यपि दीपोवाच्य इत्यादि तथाच पूर्वदक्षिणपश्चिमोत्तरदिशासु पूर्वाह्णमध्याह्नसायंनिशार्द्धान्तं लग्नदशमसप्तमचतुर्थभावेषु सूर्यसतिक्रमाद्दीपोवाच्यइति ॥ १६ ॥ ॥२४॥

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

द्व्यंगेइति द्विस्वभावराशौ यत्रांगेरविर्लग्नात्स्यात् तत्रदीपः सकृच्चालितोवाच्यः। पूर्वश्लोकेस्नेहवर्त्योः सूचितंविशेषंस्फुटयति चंद्रेतैल मितिपूर्वदृक्के प्रथमेद्रेष्काणेचंद्रेसति तैलादिनापूर्णोदीपोज्ञेयः मध्यमे मध्यमः अंत्ये क्षीणः यद्वा पूर्वदृक्के पूर्णे चंद्रे दीपः स्नेहपूर्णः मध्ये मध्यःक्षीणेक्षीणइति द्वितीयतृतीययोस्तुततोप्यल्पत्वादत्यल्पत्वाद्यबोध्यमिति एवं तनोर्वर्तिरपिज्ञेया तथाहि पूर्वद्रेष्काणेलग्नेसति वर्तिः पूर्णानूतनेतियावत् लग्नेमध्यद्रेष्काणेसतिमध्याअर्द्धदग्धेतियावत् । अंतिमेद्रेष्काणेक्षीणा । चंद्रवदेवोहनीयाज्ञेयेत्यर्थः ॥ १७ ॥

द्व्यंगेर्केदीपः सकृच्चालितोथ चंद्रेतैलं दीपकं पूर्वदृक्के। पूर्णमध्येऽर्द्धे त्रिभागं तृतीये वर्तिर्लग्नादेवमेवोहनीया ॥ १७ ॥ दीपोवितैलोंगषडष्टगेब्जे सतैलइन्दौगिरिखेसिताक्यों: ॥ सूर्योंगतोयत्रच दिग्विभागे पूर्वादिके तत्रहिदीपउक्तः ॥ १८ ॥ मित्रे मध्ये लग्नेन्द्वोः स्यात् ॥ आज्यन्दीपे तैलंत्वैनौ ॥ १९ ॥

प्रकरांतरेणस्नेहादौविशेषंदर्शयति दीपइति अंगषडष्टगेऽब्जेचंद्रे लग्नषष्ठाष्टमान्यतमगेसति दीपस्तदानींवितैलोवाच्यः। पुनः इंदौ चंद्रे गिरिद्वितीयगे सतिसतैलः तथा खेलग्नाद्दशमेसिताक्यों: सत्त्वेपिदीपः सतैलइति । दिनकृतस्तुभवेदिति सूचितां दीपदि शंस्पष्टयतिसूर्योंगतइति स्पष्टंनिरूपितमेवप्राक् ॥१८॥ अथस्नेहत्वेनाज्यतैलयोरुभयोर्बोधात्तत्रविशेषजिज्ञासायामाह मित्रेमध्येइति लग्नचंद्रयोर्मध्येमित्रेसूर्येसति दीपेआज्यंघृतंवाच्यं तयोर्मध्ये ऐनौ शनौसति तैलंवाच्यम् इनस्यरवेरपत्यम् ऐनिः शनिरित्यर्थः कन्याना



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

मकंछंदः भृगौचेत्कन्येति तल्लक्षणात् ॥१९॥ तत्रानेकदीपयोगमाह सूर्येबलिनीति तत्रसूर्येबलवति अवनिजैनिदृशा भौमशनिभ्यांपूर्ण दृष्ट्याहष्टेसतिदीपा अमिता बहवःस्युः। तत्रतृणाग्निप्रकाशयोगमाह व्यवस्थेति लग्नाद्द्वादशस्थाने पूर्वोक्तयोगाभावेकश्चित् सबलग्रहो भवेत् तदातृणाग्नेस्तदानींप्रकाशोवाच्यः। अथग्रहवशात्प्रसूतागाराकारविशेषमाह सूर्येसकाष्ठमिति सूर्येबलिष्ठे स्वर्क्षादिगेकेंद्रस्थेच प्रसूतागेहं सकाष्ठम् अधिककाष्ठघटितमदृढंचवाच्यम् एवमिंदौ चंद्रे तथाविधे नवरम्यगेहं नवंनूतनंरम्यंसुंदरं भृगौशुक्रेप्येवं विदिबुधे

सूर्येबलिन्यवनिजैनिदृशाऽमिताःस्युर्दीपाव्ययस्थसबलग्रहतस्तृणाग्निः ॥ सूर्ये सकाष्ठमदृढं नवरम्यगेहमि न्दौभृगौचविदिरम्यमनल्पशिल्पम् ॥ २० ॥ दग्धं कुज भवति संस्कृतजीर्णमार्कौ स्वर्क्षादिगेथधिषणे सुदृढंहिसद्म ॥ द्व्यंगे द्विशालभवनंधनुषित्रिशालं जीवेपरोच्चलवगे बहुभमिवेश्म ॥ २१ ॥

तथाविधेरम्यंसुंदरम् अनल्पशिल्पं बहुविधचित्रोपेतंविविधबुद्धिमत्कारिभिः कल्पितम् ॥ २० ॥ एवंविधेकुजेसति दग्धं वह्न्यादिना आर्कौ शनौ तथाविधे संस्कृतजीर्णंसंस्कृतमपि जीर्णतां प्राप्तमेव अथधिषणे गुरौस्वर्क्षादिगेकेंद्रगे सुदृढंसुंदरंच सद्म गृहंवाच्यं पुन स्तस्मिन् जीवे द्व्यंगे द्विस्वभावराशिस्थेसतितथाविधे द्विशालभवनं शालाद्वयविशिष्टंभवनम् । वासः कुटीद्वयोः शालेतिकोशात् सभागृहंशालेत्युच्यते दलानइतिभाषायां धनुषिजीवेतु त्रिशालभवनंवाच्यं जीवेपरोच्चलवगेकर्कपंचमांशगे वेश्म बहुभूमिज्ञेयं बहुवि



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

धभूमिकाविशिष्टंराजमंदिरसदृशमित्यर्थः ॥ २१ ॥ अथभूषणादौतत्तद्धातुप्राचुर्यंवक्तुं तत्कारकग्रहानाह ताम्रमिति ताम्रं रवेः मणिश्चं
द्रकांतादिनामकश्चंद्रस्य । हेम सुवर्णं कुजस्य युक्तिर्लाक्षाबुधस्य शुक्तिरितिपाठेशुक्तिर्बुधस्य । रूप्यं रजतंगुरोः । मुक्ता भृगोः ।
अयो लोहं शनेः अर्कमुखैः सूर्यादिग्रहैः सवीर्यैस्तत्तद्धातवोवाच्याः । ग्रहाणांबलाबलानुसारेणजातस्यगुणानाह रवीन्दुवीर्येति सूर्यचं
द्रयोरुभयोर्बले पितृमातृतुल्योगुणैर्बालोवक्तव्यः सूर्येबलिनिपितृतुल्यःचंद्रेमातृतुल्य इत्यपि वस्तुतो दिवार्कशुक्रौपितृमातृसंज्ञकौ
शनैश्चरेंदूनिशितद्विपर्ययात् ॥ पितृव्यमातृष्वसृसांज्ञितौचतावथौजयुग्मर्क्षगतौतयोः शुभावित्यप्यत्रबोध्यं किंच सूर्योबलिष्ठः सन् यत्त्रिं

ताम्रं मणिर्हेमचयुक्तिरूप्ये मुक्तायसीचार्कमुखैः सवीर्यैः ॥ रवींदुवीर्ये पितृमातृतुल्यो यत्त्रिंशकेऽर्कोस्य
गुणो ग्रहस्य ॥ २२॥ तनूनवांशेशसमस्तु मूर्त्याबलिष्ठखेटप्रतिमोपिवास्यात् ॥ विधोर्नवांशेशसमश्चवर्णो
जातिं कुलं देशमतो वदेज्ज्ञः ॥ २३ ॥

शांशकेस्यात् अस्यग्रहस्यगुणावाच्याः यद्वा अस्येति जातस्यबालस्येत्यर्थः त्रिंशांशास्तुओजेशराक्षाष्टनगेषवस्त्रिंशांशाः कुजार्क्य
चितवित्सितानामिति पूर्वोक्ताः गुणास्तु चंद्रार्कजीवाज्ञसितौकुजार्कीयथाक्रमंसत्त्वरजस्तमांसीत्युक्ताः अन्येऽपिगर्वितत्वलज्जितत्वा
दयः सौम्यत्वक्रूरत्वादयश्च ॥ २२ ॥ जन्मलग्नानुसारेणजातस्यशिशोराकारवर्णादेर्ज्ञानप्रयोजकं दर्शयति तनूनवांशेति मूर्त्याऽऽका
रेणबालस्तनूनवांशस्वामिसमानोवाच्यः स्त्रियांमूर्तिस्तनुस्तनूरितिकोशात्तनूशब्दोदीर्घोकारांतोपिसमशब्दः सादृश्यार्थकः मूर्त्ये

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

सं०नि० त्यत्रप्रकृत्यादिभ्यइति तृतीया मूर्त्त्यातनूनवांशेशसादृश्यवानित्यर्थः तनुनवांशनाथस्यासामर्थ्ये त्वाह बलिष्ठखेटप्रतिमइति जन्म सटी०
॥२६॥ समये यो बलिष्ठोग्रहस्तत्रापिजन्मचक्रादौत्रिकेतरस्थः तत्प्रतिमोदीर्घत्वगौरत्वादिनातत्सदृशः । गौरत्वश्यामत्वादिवर्णेजातिदेशा
दौचविशेषमाह विधोरिति यस्मिन्नवांशेजन्मनिचंद्रोवर्त्तते तन्नवांशनाथवर्णसदृशवर्णइत्यर्थः इतरसाकांक्षस्यापिनवांशादिपदस्येश सं० २
पदेनसमासः देवदत्तस्यगुरुकुलमित्यादिवत् जातिं ब्राह्मणत्वादिरूपां विप्राधीशौभार्गवेज्यावित्याद्युक्तां कुलं प्राचीनयूथादिरूपं
देशं सौराष्ट्रपांचालमागधकान्यकुब्जाद्यंप्रसिद्धमपियथासंभवंबलिष्ठग्रहान्नवांशेशादितोवावदेदिति ॥ २३ ॥ गर्भस्रावादियो

यमारौ तनुगौस्त्रीणांगर्भस्रावो भवेदपि ॥ गर्भपातो भवेच्चंद्रेतद्धेवातद्युतेक्षिते ॥ २४ ॥ प्रयच्छ
तश्च प्रथमंहि पूर्णं फलं द्युतम्योः पितृमातृखेटौ ॥ मध्येच मध्यं चरमेतितुच्छं शुभाशुभं वा
परिकल्पनीयम् ॥ २५ ॥

गमाह यमाराविति तनुगौ जन्मलग्नगौ यस्य पुरुषस्य भवेतां तस्य स्त्रीणां गर्भस्रावो वाच्यः केचित्तु स्त्रीणामेव जन्म
लग्नादौ यमारवैशिष्ट्ये गर्भस्रावयोग इत्याहुः एवं चंद्रे यमभौमराशिस्थे यमाराभ्यां युक्ते दृष्टे वा गर्भपातयोगः ॥ २४ ॥ पितृमातृ
कारकग्रहसंबंधिफलविशेषमाह प्रयच्छत इति पितृमातृखेटौ पितृमातृकारकौलग्नसूर्य्ययोरन्यतमतो दशमेशः सूर्यश्च ॥२६॥
पितृकारकः एवं लग्नचंद्रान्यतमचतुर्थेशश्चन्द्रश्च मातृकारकः आचार्यस्तु स्वर्क्षतुंगमूलत्रिकोणगाः कंटकेषु यावन्त आश्रिताः

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

सर्व एवतेन्योन्यकारकाः कर्मगस्तुतेषां विशेषतः अत्रोदाहरणमपि स एव—कर्कटोदयगते यथोडुपे स्वोच्चगाः कुजयमार्कसूरयः ॥ कारकानिगदिताः परस्परं लग्नगस्य सकलोम्बराम्बुग इत्याह एवमपि तौ द्युतम्योः दिनरात्र्योः हिनिश्चयेन प्रथमम् आदावेव पूर्णं फलं प्रयच्छतः पितृकारको दिनसंबंधिप्रथमतृतीयभागे जातस्य मातृकारको रात्रिप्रथमतृतीयभागे जातस्येत्यर्थः मध्ये द्युतम्योर्मध्यमे भागे मध्यं मध्यमं फलं चरमे अंतिमभागे तुच्छमल्पमित्यर्थः अथवा शुभाशुभम् आदौ शुभं मध्येमध्यम् अंते अशुभं पितृमातृद्वारा स्वस्य पित्रोरेववा शुभाशुभादिकमिति यावत् ॥ २९ ॥ अथ तत्र जातस्य शरीरे चिह्नयोगमाह शीर्षाद्यंगे इति स्व

शीर्षाद्यंगे स्वस्वदृक्कप्रसिद्धेऽसत्सद्योगादेर्व्रणाद्यंतिलाद्यम् ॥
तत्कालांगे यत्रसन्नत्रिखेटाःस्थानर्क्षाद्येऽर्केन्दुयोगेचराद्यम् ॥ २६ ॥

स्वदृक्कप्रसिद्धे स्वस्वद्रेष्काणेषु शास्त्रप्रसिद्धे शीर्षादिपादांतावयवे कंदृक्श्रोत्रनसाकपोलहनवो वक्त्रंच होरादयस्ते कण्ठांसकबाहुपार्श्वहृदयक्रोडानि नाभिस्ततः ॥ वस्तिः शिश्नगुदे ततश्चवृषणावूरू ततो जानुनी जंघांघ्रीत्युभयत्र वाममुदितैर्द्रेष्काणभागैस्त्रिधेति निर्णीते तत्रासत्सद्योगादेः असद्ग्रहयोगेक्षणादितस्तत्तदंगे व्रणाद्यं वाच्यं सद्ग्रहयोगादितस्तु तिलाद्यं तिलमशकाद्यात्मकं चिह्नं च वाच्यम् अथोक्तचिह्नादेर्यावद्देहभावित्वं कादाचित्कत्वंवेति विशेषजिज्ञासायामाह तत्कालांगे इति तस्मिन काले पुरुषावयवे यत्रावयवे सन्नत्रिखेटाः अत्र बुधस्य खेटत्रयांतर्गतत्वं बोध्यम् एकोबुधो द्वावन्यौ चेत्यर्थः वरांगत्वादिना कल्पित

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

मेषादिराश्यात्मके तत्रार्केन्दुयोगे चराद्यं चिह्नं ज्ञेयं चरे चरग्रहयोगे चरं चिह्नं स्थिरे स्थिरग्रहयोगे स्थिरं तत्र सद्गखेटत्रयावै रावश्यकत्वं कालांगान्यपि तत्रोक्तानि ॥ कालांगानि वरांगमाननमुरोहृत्क्रोडवासोभृतो वस्तिर्व्यंजनमूरुजानुयुगले जंघे ततो ऽङ्घ्रिद्वयम् ॥ मेषाश्विप्रथमानवर्क्षचरणाश्चक्रस्य राशय इति ॥ २६ ॥ जन्मलग्नहोराद्रेष्काणसप्तांशादिलग्नेषु विचारणीयतत्त्तपदार्थविशेषान्निरूपयति लग्नेधीर इत्यादिद्वाभ्यां तत्र सप्तांशास्तु सप्तांशपास्त्वोजगृहे तदीशाद्युग्मे गृहे सप्तमराशिपास्त्वित



लग्नेधीरश्चिन्तयेद्देहभावं होरालग्नात्संपदाद्यंसुखंच ॥ द्रेष्काणांगाद्बन्धुसौख्यंविचिंत्यं सप्तांशांगात्सं ततःस्याद्विचारः ॥ २७ ॥ कलत्रसौख्यादिनवांशलग्नाद्विलोक्यमर्कांशकतोत्रपित्रोः ॥ त्रिंशांशकादिष्ट फलंचवाच्यं सर्वंविलग्नादपि चिन्तनीयम् ॥ २८ ॥

ज्ञेयाः होरालग्नादयस्तु सर्वे प्रागुक्ता एव बोध्या तथाहि । होरे समेब्जभगयोर्विषमेर्कविध्वोः दृकाणपाःस्युः स्वसुतांकनाथा उक्ता नवांशाः स्वभतोर्कभागाः ओजेशराक्षाष्टनगेषवह्निशांशाः कुजार्कीज्यकवित्सिानां समेन्यथोक्तादित्यादि एतत्फलमपि संक्षेपतो ग्रथांतरात् । होरानाथो यदा भानुर्बाल्ये दुःखी भवेन्नरः । मध्येच समताज्ञेया वृद्धत्वे बहुलं धनम् ॥ पितुर्निधनकालेच धनंक्षीणं भवेन्न



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

णाम् ॥ बाल्ये तस्य पितुर्नाशो मातरं जीवितां वदेत् । निजबाहूर्जिता लक्ष्मीर्गृहे तिष्ठति सेवया।कष्टवृत्त्या वा कृष्यादितः क्रयतो वा एवं होरापतिश्चंद्रश्चेद्बाल्ये धनाधिक्यं मध्ये साम्यं वृद्धत्वे निर्धनत्वम् । होरेशः खलु दुष्टखेचरयुतो वक्रान्वितो वा भवेत्प्रष्टुर्वक्रतरं च नेत्रयुगलं वक्रं च वक्रं तथा । होरेशो यदि भास्करः शशियुतो जिह्वा सुजिह्वा फलं होरेशो यदि चोडुपो शुभयुतः स्युर्वक्रदंताधराः । एवं द्रेष्काणेशो यत्र लग्ने बली तदंकसमाः सोदराः तत्रशुभयोगे तेषामुदयः पापयोगे नाशः एवं शत्रुमित्रसमयोगे शत्रुमित्र समत्वं तेषाम् एवं तल्लग्ने द्रेष्काणेशे च पुंस्त्वादौ पुंस्त्वादिकमपि तेषाम् एवं दुःस्थानस्थत्वे आत्मघातादि एवं चंद्रपापादियोगे लो मतिलादिमृतिस्थे मृतिः रविकुजयोगे तु विद्युदादिना मृतिः । एवं सप्तांशपादितः संततिसुखं विचार्यम् । एवं नवांशेशे शुभे शुभ स्थानादियोगे शुभस्त्रीप्राप्तिः केंद्रस्थे तु षोडशाब्दाभ्यंतर एव विवाहः कोणस्थे तु तत्त्वाभ्यंतरे विवाहः तस्मिन् खले खलयोगे च वैपरीत्यं तस्या नवांशेशेऽष्टमादिस्थे स्वहस्तान्मृतिः षष्ठस्थे रविराहुयोगे विषान्मृतिः भौमयोगेऽग्नितः चंद्रयोगे व्यभिचारिणी च । एवं द्वादशांशेशे जन्मलग्नगे पितृसमः ॥ रविलवाधिपतिः खलखेचरः खलयुतः खलगहगतोपिवा । रिपुयुतो रिपुदृष्टिसमन्वि तो भवति नीचगतोस्तगतोपिवा ॥ दिशतिरिष्टगणंरिपुरोगतो ज्वलनतोपि तथा नृपचौरतः । धनहर्तिं गृहतो नृपतः सदा मन सि पापरतिं विरतिं सुते ॥ एवं त्रिंशांशपे क्रूरे दुःस्थे कुटुंबविरोधः । सौम्ये सुस्थे सुखं षष्ठे राजकृतो बंधः अष्टमस्थे राजतो मृत्युः एवमन्यदपि सर्वं स्वबुद्ध्योह्यमिति स्पष्टार्थौ श्लोकौ ॥ २७ ॥ २८ ॥

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

अथपित्रादिकारकसूर्यादिग्रहानुसारेण पित्रादिस्वसंबंधिशुभाशुभविचाराय तत्तत्स्थानविशेषान्निर्दिंशति पिताम्बरे इति अर्कात्सूर्यादंबरे दशमे नवमे च पिता चिंत्यो विचार्यः पितुः शुभाशुभादिकं तस्माद्विचार्यमित्यर्थः सदसद्ग्रहयोगेक्षणादिसंबंधे तु तदनुरोधेनेति शेषः एवमुडुपाच्चंद्रादंबुनि चतुर्थे सर्वत्र सदसद्ग्रहादिसंबंधे तदनुसारेण शुभाशुभादिकं वाच्यम् । अस्रात् भौमात् सोदरे तृतीये भ्राता भ्रातुस्तद्विचार्यं वाच्यम्।बुधादंबुनीत्यत्र बुधाद्वैरिणीति पाठो युक्तः लेखकप्रमादादंबुनीतिजातं बुधाद् षष्ठेसदसद्ग्रहयोगक्षणादौ मातुलादेः शुभाशुभं वाच्यमित्यर्थः आदिपदान्मातुलपुत्रादेरपि ततो विचारः शत्रोश्च जीवात्पंचमे पुत्रो विचार्यः । पंचमतइति

पिताम्बरेर्कान्नवमेचचिन्त्यो मातोडुपादम्बुनिसोदरेस्रात् ॥ भ्राताबुधादम्बुनिमातुलादिर्जीवात्सुतः पञ्चमतोविचार्यः ॥ २९ ॥ कान्ताद्युने भार्गवतोथमृत्यौ शनेस्तवंशोत्रशुभाशुभाद्यम् ॥ बुद्धाग्रहाणांसकलंबलाद्यं फलंवदेद्देशिकईशभक्त्या ॥ ३० ॥

सप्तम्यर्थेंतसिल्।यद्वावादायसप्तांकतृतीयात्मजगे गुरौ।तदब्दे गर्भयोगः स्यादित्यप्यत्राचिंत्यम् ॥२९॥ एवंभार्गवतो द्युने सप्तमे कान्ता भार्या चिंतनीया । एवं शनेर्मृत्यावष्टमे वंशो विचारणीयः आयुरपि शनेः एतेन सूर्यादीनां तत्तत्कारकतापि सूचिता यतस्तेषां पितृमातृभ्रातृमातुलपुत्रस्त्रीजीवनादिकारकताया लोकशास्त्रासिद्धत्वात्।इदमत्रबोध्यं लग्नादुक्तेषुदशमादिषु स्थानेषु लग्नलग्नेशयोर्बलिष्टत्वे पित्रादीनां शुभाशुभविचारःकर्त्तव्यःतदभावसूर्यादितो दशमादिषु द्वयोर्बलाबलसाम्ये द्वयोरेवसदसद्योगार्द्धं वाच्यं तत्रबलंतुसार्द्धानि ॥२८॥

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

षट् तीक्ष्णकरो बलीयान् चंद्रस्तुषट्पंचवसुंधराजः ॥ सतेंदुजः सार्द्धरसागुरुश्चसार्द्धानि पंचात्रसितोबलीयान् ॥ मंदस्तुपंचैवहिषड्बला
नांसंयोग एवापरथान्यथा स्युरिति भावतश्च्युतानां तुबलंदुर्वचम् एवं ग्रहाणां भावानां च बलाबलविवेकेन देशिकः फलमादेष्टुमुद्युक्तः
ईशभक्त्या उपासनाबलेनगुरुभक्तियुक्तः सन् सद्बुद्धिः सकलं फलं वदेदित्यर्थः ॥ ३० ॥ निजाग्रजातेत्यादिरुक्तार्थः श्लोकः ॥ ३१ ॥ इतिसंकेत
निधिव्याख्यायां द्वितीयः प्रसूतिसंकेतः समाप्तः ॥ २ ॥ अथ प्रकीर्णसंकेतं तृतीयं समारभमाण आदौ तद्घटकतया जातकस्य कांश्चि

निजाग्रजातात्मजघासिरामकृतेहिसंकेतनिधौकृतेस्मिन् ॥ ज्योतिर्विदारामदयालुनाम्ना प्रसूतिसंकेत
इतःसमाप्तिम् ॥ ३१ ॥ इतिसंकेतनिधौप्रसूतिसंकेतोद्वितीयःसमाप्तः ॥ अथतृतीयःसंकेतः ॥ सन्ध्याद्व
येजनिमतोत्रयदेन्दुहोराराश्यन्तगैःखलखगैर्निधनंशिशोःस्यात् ॥ केन्द्रैःसपापविधुभिः सकलैस्तथैव
कामांगयोरपिमृतिःखलकर्त्तरीचेत् ॥ १ ॥

दायुरादियोगान् कीर्त्तयति संध्याद्वये इति संध्याद्वये पूर्वपश्चिमसंध्ययोर्जनिमत उत्पत्तिमतो जातस्येति यावत् । जनिरुत्पत्तिरुद्भव
इतिकोशात् । संध्याचसन्ध्यात्रिनाडीप्रमितार्कबिंबादर्द्धोदितास्तादधऊर्द्धमित्युक्तलक्षणा अत्र संध्याद्वये अवच्छिन्नत्वं त्रल्प्रत्ययार्थः ।
तदवच्छिन्ना यदा चंद्रस्य राशिदलरूपा होरा स्यात् पुनः खलखगैः पापग्रहे राश्यंतस्थैः राशीनामन्तिमांशगैः सद्भिः तत्रसमये जात

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

स्यशिशोः शिशुत्व एव निधनं वाच्यम् अत्रैवयोगांतरं केंद्रैरिति सकलैः केंद्रैः सपापविधुभिः पापग्रहैर्विधुना चंद्रेण च सहितैः सद्भिः त थैव शिशुत्व एव निधनमिति अत्र पापग्रहैः सह समासघटकतया पच्यमानविधुपदवाच्यस्य क्षीणत्वं सूचितं तथा क्षीणचंद्रस्य पापत्वेन पापग्रहोपादानेनैवोपादानसिद्धौ पुनस्तदुपादाने केवलस्य पूर्णस्य चंद्रस्यादूषकत्वमप्युक्तं पुनर्योगांतरं कामांगयोरिति सप्तमलग्नयोरुभयोरेव पापकर्त्तरीसत्त्वेपि जातस्य मृतिर्वाच्या अर्थादेकत्र पापकर्त्तरीसत्त्वे मरणांतकष्टमिति ॥१॥ पुनस्तत्रैव योगद्वयं

स्मरांगयोःक्रूरखगावसद्युतः शशीनदृष्टश्चशुभैस्तदाक्षयः ॥
शुभोनकेन्द्रैर्व्ययगे विधौ कृशे खलैश्चतन्वष्टमगैर्द्रुतं मृतिः ॥ २ ॥

स्मरांगयोरिति यदा सप्तमलग्नयोरुभयोरेव क्रूरखगौ भवतः तथा तत्र चंद्रोपि यत्रकुत्र स्थितः शुभैरवीक्षितः पापैर्युतोदृष्टोवातदापि क्षयो नाश एव इत्येको योगः एवं शुभोनैः केंद्रैः शुभग्रहरहितैः चंद्रे च क्षीणे व्ययस्थे सति तथा पापैर्लग्नाष्टमोभयगैस्तदापि द्रुतमेव शिशोर्मृतिरादेश्येति द्वितीयः ॥ २ ॥





CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

पुनर्योगांतरं षष्ठाष्टमेऽब्जेइति अब्जे चंद्रे षष्ठाष्टमगे राहौच चतुर्थगेसति परंतु राहौ चंद्रेच दुःस्थे एव विनिगमनाविरहादुभयोरेव दुःस्थत्वं ज्ञेयं तदापि सद्योमृतिः अस्य प्रतीकारमाह इहेश्वरोर्च्य इति इहयोगे ईश्वरो मृत्युंजयादिरूपेण दुर्गारूपेणचाराधनीयः विधिना तदाराधनेनैव तादृशापयोगोपशमः अत्रविशेषमाह वर्षेणेति यदि चन्द्रराह्वोरुक्तस्थानस्थत्वेपि दुःस्थत्वाभावे केंद्रत्वा वच्छेदेन पापग्रहवैशिष्ट्येच वर्षेण शिशोरेकवर्षांतमायुरित्यर्थः यद्वा ईश्वराराधनेपि केंद्रे सपापे पूर्वोक्तयोगसद्भावे वर्षेण मृति

षष्ठाष्टमेऽब्जेसुखगे च राहौ दुःस्थेमृतिः सद्यइहेश्वरोर्च्यः ॥ वर्षेणकेन्द्रेसखलेथयद्यन्योन्यर्क्षगौस्तोस्रगुरू शिवाब्दैः ॥ ३ ॥ सक्रूरोऽब्जोऽव्ययमृतिमदांगेष्वकेंद्रस्थसौम्यैर्नोदृष्टोसौ शिशुमृतिकरोथाष्टमारिस्थि तोऽब्जः ॥ दृष्टःक्रूरैरहनिजननंयस्यकृष्णेचपक्षेशुक्लेसद्भिर्निशिजनिरवत्यत्रतंनान्यथोह्यम् ॥ ४ ॥

र्वाच्यैव योगांतरम् अथेति यद्यस्रगुरू कुजजीवौ अन्योन्यर्क्षगौ परस्परराशिगौस्तः तदा शिवाब्दैः एकादशवर्षैर्मृतिर्वाच्या कुजगुर्वोर्दुः स्थत्वमत्रापि बोध्यम् ॥ ३ ॥ पुनर्योगांतरं सक्रूरइति व्ययाष्टमकामलग्नेषु सपापश्चंद्रःपुनरकेंद्रस्थैरपि सौम्यैर्नदृष्टः सौम्यग्रहाणां केंद्र स्थत्वचन्द्रदर्शित्वोभयधर्माभावे तत्कालीनचंद्रस्यैवशिशोर्मृत्युकरत्वमिति फलितं क्वचिच्चंद्रस्यैव शिशुजीवनहेतुत्वंदर्शयति अथा ष्टमेति क्रूरग्रहैर्दृष्टः षष्ठाष्टमस्थश्चंद्रः कृष्णपक्षे दिवसे जातं बालं रक्षत्येव एवं शुभग्रहैर्दृष्टः षष्ठाष्टमस्थश्चंद्रः शुक्लपक्षे निशिजातं

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

रक्षत्येवनान्यथा तद्वैपरीत्येतु नरक्षति इत्यूह्यं ज्ञेयम् ॥४॥ पुनर्मृत्युयोगांतराणितनाविति तनौ सूर्यें उत अथवा चंद्रे शुभैरयुक्तेऽदृष्टे च शुभयोगदृष्ट्युभयाभावेऽन्यतराभावे वा मृतिर्वाच्या अर्थादन्यतरसत्त्वे नमृतिः किंतुतत्समं दुःखम् एवं बलिष्ठैः खलैस्त्रिकोणाष्टम स्थैरपि मृतिः तथेति योगांतरं व्ययांकेति अर्क्यर्कविध्वसृग्भिः शनिसूर्यचंद्रभौमैः क्रमात् व्ययनवमलग्नाष्टमस्थैः अगुरुदृग्भिः बलवज्जीवदृष्टिरहितैस्तथैव शिशोर्मृतिः अथेति योगांतरं दुर्विधौ नीचशत्रुक्षीणमारकादिभागगे चंद्रे सुतनवान्त्यगांत्यांगगे

तनाविन उतोडुपेन शुभयुक्तदृष्टे मृतिस्त्रिकोणमृतिगैःखलैर्बलयुतैर्नृणां स्यात्तथा ॥ व्ययांकतनु मृत्युगैरगुरुदृग्भिरार्क्यर्कविध्वसृग्भिरथदुर्विधौसुतनवान्त्यगांत्यांगगे ॥ ५ ॥ तनोरारिविनाशगेखलखगै विधौवीक्षिते मृतिःशुभदृशासमाष्टकमतश्चमिश्रैर्दलम् ॥ खलैरिभगतेष्टमेखलदृशैकवर्षःशिशुरथौन्नृप दिगब्दकःखलखगेक्षितेकेन्द्रगे ॥ ६ ॥

पंचमनवमाष्टमसप्तमव्ययलग्नस्थे शुभादृष्टे मृतिर्वाच्येति ॥ ५ ॥ पुनर्मृतिविशेषयोगानाह तनोरिति :लग्नादरिविनाशगे षष्ठामष्टगे पापग्रहैरेव दुष्टदृष्ट्या दृष्टे चन्द्रे मृतिः सद्यः स्यात् शुभदृशा शुभग्रहैरभिदृष्टेतु समाष्टकम् अष्टौवर्षाण्यायुः अतोमिश्रैर्दृष्टे क्रूरदृष्ट्या शुभपापोभयदृष्टेदलमतः पूर्वोक्ताब्दाष्टकस्य अर्द्धंवर्षचतुष्कमायुः तथा खले पापे अरिभगते शत्रुराशिगते अष्टमस्थे पापैः पूर्ण क्रूरदृष्ट्यादृष्टे एकवर्षमायुः तथा खलग्रहेदृष्टे सूर्यें केंद्रगे शिशुर्नृपदिगब्दकः षोडशदशवावर्षाणि जीवतीत्यर्थः नृपा दशचअब्दा ॥३०॥

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

आयुरस्येतिकप्रत्ययः ॥ ६ ॥ पुनर्योगविशेषौ यमेइति सूर्यचंद्रयुक्ते यमे शनौसतिनवसमाः नववर्षाण्यायुः तथासर्वैःखलैःषडष्टमग
तैः सद्भिर्मासमात्रमायुः अथ पुनर्योगांतरं शशीक्षितबुधे पापदृष्ट्या चन्द्रदृष्टे बुधे षडष्टगे सति कर्कराशिगतेचचतुर्थशरदि चतुर्थे
वर्षे शिशोः क्षयोनाशः स्यात् योगांतरं सितेति सितोष्णगुयमाः शुक्रसूर्यशनयस्त्रय एवपापग्रहयुक्ताः शिशोर्मृत्यवेस्युः अत्र कपिंज
लालंभन्यायेन बहुवचनेनच त्रित्वान्यूनानतिरिक्तसंख्याबोधे सिद्धे पुनस्त्रय इति पदोपादानम् एकस्यापि पापग्रहायोगे योगभंग

यमेर्कविधुसंयुतेनवसमाश्चमासोऽखिलैः षडष्टमगतैःखलैरथषडष्टगेकर्कगे ॥ शशीक्षितबुधे चतुर्थशरदि
क्षयः स्याच्छिशोः सितोष्णगुयमाइमेखलयुतास्त्रयोमृत्यवे ॥ ७ ॥ रवौकुजर्क्षेशनिगेहगेपिवा बहूग्रदृष्टो
गुरुरन्तकृत्खगः ॥ शुभैरदृष्टाअशुभेक्षिताःखलामदाष्टगाःसाम्बशिशुक्षयंकराः ॥ ८ ॥ होरास्वामीपापदृ
ष्टोऽष्टमस्थोजन्मेशाढ्यश्चेन्मृतिर्वेदमासैः ॥ एवंकामेपापयुग्जन्मपाढ्योहोरेशश्चेत्क्रूरदृष्टोष्टमासैः ॥ ९ ॥

सूचनाय परंतु मरणांतकष्टं तदापि वाच्यमितिविचार्य वाच्यम् ॥७॥ पुनर्योगद्वयं रवाविति कुजर्क्षे मंगलराशौ शनिराशौ वा रवौ स
ति गुरुर्बहुभिरुग्रैः पापैः क्रूरदृष्ट्यादृष्टः सन्खगः दशमगः स्यात् सः शिशोरन्तकृत् नाशकृत् द्वितीयो योगस्तु शुभैर्ग्रहैर्नदृष्टा अ
शुभैश्चोग्रदृष्ट्या दृष्टाः पापाः सप्तमाष्टमगा यदिस्युः तदा सांबशिशुक्षयंकराः मात्रासहितस्य शिशोर्नाशकाः ॥ ८ ॥ पुनर्योगद्वयं हो
रेति होरालग्नं तत्स्वामी पापैर्दृष्टोऽष्टमस्थस्तथा जन्मेशाढ्यःजन्मराशीशेनयुक्तश्चस्यात्तदा वेदमासैश्चतुर्भिर्मासैर्मृतिर्मरणं शिशो

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

रित्येकोयोगः द्वितीयस्तु एवं कामे सप्तमे पापग्रहयुक्तजन्मराशीशयुक्तः क्रूरैरेवदृष्टो होरेशश्चेत्तदाष्टभिर्मासैर्मृत्युः शिशोरिति ॥ ९ ॥
पुनरनिष्टयोगाः सर्वेति सर्वैः पापैर्दृष्टोनशुभेनकेनापिदृष्टः गुरुरष्टमस्थश्चेत् अरिष्टकृत् यदि उक्तविशेषणविशिष्टोगुरुः कुजराशावष्ट
मस्यात्तदा ध्रुवंनिश्चयेनकष्टदः एवंकुटिलो वक्रगत्यायुक्तः शनिः केंद्रेषुनाशेष्टऽमे रिपौषष्ठेवास्थितः कुजराशावेवतनैव बलिनाऽसृजा
भौमेनदृष्टः क्रूरदृष्ट्या तदाविशेषतोवश्यमेव वर्षत्रयेणशिशुनाशकरइत्यर्थः ॥ १० ॥ पुनः कष्टयोगद्वयं शनिरिति स्पष्टं द्वितीयोयो

सर्वपापनिरीक्षितोगुरुरष्टमेनशुभेक्षितो रिष्टकृत्कुजगेहगोध्रुवमेववाकुटिलःशनिः ॥ केन्द्रनाशरिपुस्थितः
कुजगेहगोबलिनाऽसृजा वीक्षितश्चसमात्रयेणविशेषतः शिशुहानिदः ॥ १० ॥ शनिस्तनोरष्टमगस्तुकष्टद
स्त्रिकोणगोनीचइनोपितादृशः ॥ कुजेष्टमेसत्यथषष्ठमृत्युगेखलेक्षितेज्ञेब्धिसमायुरात्मजः ॥ ११ ॥ षष्ठना
शगतोबुधःशशिभेक्षयायविधोर्दृशावेदहायनतोथषष्ठलयव्ययस्थशुभग्रहैः ॥ वीक्षितोहरिकर्कगोमृतिदोऽ
शुभेक्षणतःसितः षट्समाभिरथद्भुतं जनितस्यशिख्युदयेक्षयः ॥ १२ ॥

गः त्रिकोणगइति पुनर्मृत्युयोगः कुजेइति कुजेऽष्टमगेसति बलिपापग्रहदृष्टेषष्ठाष्टमगेबुधेचसति आत्मजः शिशुःचतुर्वर्षायुर्भवती
ति ॥ ११ ॥ आयुर्योगांतरं षष्ठनाशेति शशिभेकर्कराशौषष्ठाष्टमगश्चंद्रदृष्टोबुधश्चेत् तदापि वेदहायनतः चतुर्भिर्वर्षैः शिशुनाशकरः
पुनर्योगांतरम् अथेति षष्ठाष्टमव्ययस्थशुभैर्दृष्टः [illegible] सिंहकर्कान्यतमराशिगःशुक्रः षट्समाभिः षड्वर्षाण्यायुर्य

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

च्छतीत्यर्थः पुनर्योगांतरम् अथेति शिखिनः केतोरुदयसमकालजन्मनः शिशोर्द्रुतमेवक्षयोवाच्यः ॥ १२ ॥ पुनरल्पायुर्योगः तना विति तनौलग्ने यदिपाशपक्षिणां तत्संबंधिनोदृकाणाः पापग्रहान्विताः स्युस्तदाजातस्यबालस्यसप्तमेवत्सरेमृतिः पाशपक्षिद्रेष्काणा स्तु तत्र पाशद्रेष्काणा भुजगनिगडद्रेष्काणास्ते कर्काद्यः वृश्चिकाद्यद्वितीयौ मीनांत्यएतेभुजगद्रेष्काणाः मकराद्योनिगडद्रे ष्काणइति पक्षिद्रेष्काणाः मिथुनद्वितीयः सिंहप्रथमः तुलाद्वितीयः कुंभाद्यइति बृहज्जातके उक्ताः योगांतरं खलाइति न शुभेक्षिताः

तनौदृकाणायदिपाशपक्षिणां खलान्विताःसप्तमवत्सरेमृतिः ॥ खलास्त्रिकोणेनशुभेक्षिताःशुभाःषडष्टगा श्चेद्गजवत्सरेक्षयः ॥ १३ ॥ तनौस्मरेखलग्रहेखलेक्षितान्वितेङ्गपे ॥ विधौतनौचजातकोत्रसप्तवर्षजीवनः ॥ ॥ १४ ॥ त्रिकेऽस्तगौजन्मतनुप्रभूयदा तदाशिशोराशिमिताब्दतश्च्युतिः ॥ बुधर्क्षगोब्जोर्ककुजान्वितः शुभैरवीक्षितोब्दे नवमेक्षयङ्करः ॥ १५ ॥ नीचगोष्टमगोवारस्त्रिकोणेनीचगोरविः ॥ सनरोमन्दबुद्धिर्वाभिक्षा जीवीच दुःखितः ॥ १६ ॥

पापदृष्टाः खलास्त्रिकोणेशुभग्रहास्तु षडष्टगास्तेपिपापदृष्टाश्चेत्तदा गजवत्सरेऽष्टमवर्षे क्षयः ॥ १३ ॥ पुनरल्पायुर्योगः तनाविति स्पष्टम ॥ १४ ॥ पुनरल्पायुर्योगौ त्रिकेइति षडष्टव्ययगौ अस्तंप्राप्तौ जन्मतनुप्रभू जन्मराशिजन्मलग्नेशौ तदाराशिमितवर्षाण्यायुः एवं कन्यामिथुनान्यतमगः चंद्रः सूर्यकुजयुक्तः शुभैरदृष्टस्तदानववर्षाण्यायुरिति ॥ १५ ॥ अथदारिद्र्ययोगः नीचग इति स्पष्टोर्थः ॥ १६ ॥

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

अथाल्पायुर्बह्वायुर्योगौ अंतिमांशेति सर्वे अंतिमांशगताग्रहाअत्यल्पायुः प्रदाः जननानंतरमेवमरणप्रदाः तथा यदा स्वमित्रस्वगृह स्वोच्चस्थोयोग्रहः सबह्वायुः असतिप्रतिबंधकेपूर्णायुःप्रदइत्यर्थः ॥ १७ ॥ अथांगच्छेदयोगः तनुरिति कुजराशिः मेषवृश्चिकयो रन्यतमोलग्नंस्यात् तथा सखलः सपापः सिंहेशनिश्चतदादोष्णोर्भुजयोश्छिदा छेदोवाच्यः भुजबाहूप्रवेष्टोदोरित्यमरः अथवाअ रिगेहगे षष्ठेशत्रुराशिगेशनौ अरिभिः शत्रुभिः पूर्णदृष्टचादृष्टे तदापिकरपादयोश्छिदा जातस्यवाच्या अथवा मृतौ जन्मलग्नादष्टमे

अन्तिमांशगताःखेटाअत्यल्पायुःप्रदामताः॥स्वमित्रगृहतुंगस्थोबह्वायुःखेचरोभवेत् ॥ १७ ॥ तनुः कुजर्क्षे सखलोहरौशनिश्छिदेहदोष्णोरारिगेहगेशनौः॥ अरीक्षिताढ्येकरपादयोश्छिदामृतौकुजाग्वैनिषुचच्छिदा तयोः ॥१८॥ खलत्रयाढ्येनशुभेक्षितेरिगे विधौदृशोर्हानिमुशन्तिकोविदाः ॥ नसोः कुजाग्वैनिषुनैध ने पदोः कुलीरइन्द्वर्कजयोर्नसदृशा ॥ १९ ॥

कुजाग्वैनिषु कुजराहुशनिषुसत्सु तदापि तयोः करपादयोश्छिदाज्ञेया इतियोगत्रयम् ॥ १८ ॥ अथनेत्रनासिकापादहानियोगाः खल त्रयाढ्ये इति विधौचन्द्रे अरिगेषष्ठेशत्रुराशिगे पापग्रहयुक्ते शुभैरदृष्टेपापैर्दृष्टेचसति दृशोर्नेत्रयोर्हानिं नाशं कोविदाः पंडिता उशं ति तथा नैधने अष्टमेकुजाग्वैनिषुसत्सु नसोर्नासिकयोर्हानिंवदंति तथा नैधनेएवकुलीरेकर्कराशौ इंद्वर्कजयोः चंद्रशन्योः सत्त्वेपदोः



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

पादयोर्द्वानिंवदंति ॥१९॥ अथगोब्राह्मणादिवधयोगः खलइति खलः पापग्रहः पापस्यैवराशौस्थितः राहुमंदाभ्यामरिदृशाद्दृष्टः विधौ चंद्रेतुसपापेसूर्यभौमशनिभिःपूर्णदृष्टचाद्दृष्टेसतिपुरुषः वशाद्द्विजान् वशावंध्यासुतायोषास्त्रीगवीकारिणीषुचेतिमेदिनी। तथाच वंध्यां गाम्। करिणीधेनुकावशेतिकोशात्। हस्तिनींवा ब्राह्मणांश्चहंतीत्यर्थः।रोग योगः रुजेति एकगैरेकराशिस्थैस्त्रिचतुरादिपापैः रुजारोगोवाच्यः अथ खलतायोगः विशुक्रेति खौयत्रकुत्रगतेपापत्रययुक्तेसति सस्वयंखलोज्ञेयः परंतुशुक्रेणापियोगेखलत्वस्यमांद्यमपिज्ञेयमित्य

खलःखलर्क्षेरिदृशाऽग्रुमन्दयोर्विधौसपापेऽर्ककुजार्किवीक्षिते॥ वशाद्द्विजान्हंतिरुजैकगैः खलैर्विशुक्र पापत्रययुग्रवौखलः ॥ २० ॥ निजर्क्षगोऽन्योम्निकुजाच्छविद्युतो विधुन्तुदश्चेत्क्षणिकापदृद्धिभाक्॥ धनस्मरभ्रातृषुचेत्खलग्रहा गुरौसुतेस्यात्पुरुषःकुवृत्तजः ॥ २१ ॥ अम्बुव्ययाम्बरगतेषुखलेषुदेशाद्देशान्तरंव्रजतिदुःखकरःस्वपित्रोः ॥ सर्वेषु भाग्यसुतबन्धुगतेषुपूर्वापत्यक्षयोऽपरसुतोऽपरदारजः स्यात् ॥ २२ ॥

र्थः ॥ २० ॥ अथलक्ष्म्याअस्थैर्ययोगः निजर्क्षग इति विधुंतुदोराहुः निजर्क्षगःकन्यागतः कुजशुक्रबुधयुक्तः दशमेस्यात् तदाक्षणिकापदृद्धिभाक् आपदमृद्धिंच क्षणे क्षणे भजति प्राप्नोति चलश्रीरित्यर्थः अथासज्जातयोगः धनेति धनसप्तमतृतीयेषु पापः पंचमे विबले गुरौसति पुरुषः कुवृत्तान्निंद्याचारवतो जात इति वाच्यमिति ॥ २१ ॥ अथ पर्यटनयोगः अंबुव्ययेति यतः पर्यटनशीलः अतः



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

स्वपित्रोर्दुःखकरः तत्प्रतिकूलत्वात् । पूर्वापत्यहानियोगः सर्वेष्विति अपरदारज इति दारानेकत्वमप्युक्तम् ॥ २२ ॥ विधुरत्वादियोगः षष्ठे इति कुजेषष्ठे राहौ मदगे शनावष्टमेच सति नरो विधुरोदाररहितः विधुर्यः परतंत्रश्च स्यात् । अथान्वजातयोगः तन्वंतेति लग्नां तिमांशे तिथ्यंतेदिनांते च जातः दिनांते इत्युपलक्षणं निशांतस्यापि तथाचावसानद्वयत्रययोगे एवायं योगः असौशिशुरन्वजातः तमनुकोपि नोत्पद्यते इत्यर्थः ॥ २३ ॥ पित्रोरनिष्टयोगमाह भानुरिति स्पष्टम् । पुत्रात्पित्रोर्मृत्युयोगः तथारिभस्थाविति भानुरि

षष्ठे कुजेगौमदगेर्कसूनौमृतौनरः स्याद्विधुरोविधुर्य्यः ॥ तन्वंततिथ्यंतदिनान्तजातश्चरांशकेऽसौशिशुर न्वजातः ॥२३ ॥ भानुर्मदेव्योम्निकुजेव्ययेऽगौ पित्रोर्विनाशायतथारिभस्थौ ॥ चेद्राहुजीवौतनुगौसुखेवा पुत्रान्मृतिःसिद्धमितैश्चवर्षैः ॥२४॥ तनौसुखेखेचनिजर्क्षगाःखला यदातदाजीवतिकष्टतः क्वचित् ॥ शुभग्र हाणांसुदृशात्रजीवने परंत्वयंक्रूरमतिःकुकर्मकृत् ॥ २५ ॥

त्युक्तयोगसत्त्वे शत्रुराशिस्थौ राहुजीवौ तनुगौ सुखेचतुर्थे वा भवतः तदा पुत्राच्चतुर्विंशतिमिते वर्षे पित्रोर्मृतिर्वाच्या ॥ २४ ॥ अथ कष्टेन कथंचिज्जीवनयोगः तनाविति लग्नचतुर्थदशमेषु सर्वेषु निजर्क्षगाः पापास्तदा कष्टेन जीवनं कथंचित् अत्र हेतुमाह शुभग्रहाणामिति तेषुपापेषु शुभानांशुभदृष्ट्या जीवनेपि परंतु क्वचिदशेषगुण्यमपीत्याह परंत्विति जीवनेप्ययं क्रूरमतिः कुकर्म



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

कृदिति जीवनमपि निष्फलमेवेतिज्ञेयम् ॥ २५ ॥ पुनः पित्रोरनिष्टयोगः लग्ने इति लग्नषष्ठसुतान्यतमगाः सूर्यराहुमंदजीवाश्चेत् शिशुः पित्रोरशुभायैव । स्वस्यकष्टयोगः क्रूराइति दशमतृतीयसप्तमव्ययेषु सर्वेष्वेव सर्वे क्रूराश्चेत् जातस्य शिशोः शरीरे सदा कष्टं वाच्यमिति ॥ २६ ॥ पितुरनिष्टयोगः तनाविति स्पष्टम् अथ वंशक्षयहेतुदरिद्रयोगः अथेति स्पष्टम् अत्र सर्वेषु केंद्रेषु धने त्रिकोणेच गुरुशुक्रव्यतिरिक्ताः क्रूराः सर्वे यदि स्युस्तदा वंशोच्छेदाय दारिद्र्ययोगः पूर्वैरुक्तः अत्र चंद्रबुधयोरपि पापत्वेन ग्रहणं यतः

लग्नषष्ठवासुतेर्काशुमन्दजीवाश्चेज्जातोऽशुभायैवपित्रोः ॥ क्रूरामध्यभ्रातृकामव्ययेषु सर्वेसर्वेष्वत्रकष्टंसदांगे ॥ २६ ॥ तनौयमेब्जेचरिपौबुधेस्ते पितुःक्षयोथाखिलकेन्द्रगाश्चेत् ॥ क्रूराधनेवापितथात्रिकोणे वंशक्षयायैषदरिद्रयोगः ॥ २७ ॥ यमेधनेङ्गेचगुरौतृतीये राहौतदास्यान्निधनंजनन्याः ॥ गोद्वन्द्वकन्याहरिगायभागुशुक्रासृजश्चेत् क्रमतस्तथैव ॥ २८ ॥ धनेग्विनाच्छार्कजवित्सुजातः पितर्यतीतेनशुभायमातुः ॥ कुम्भेयमेजेचविधौव्ययेर्के मृगेसितेतातधनंनभुंक्ते ॥ २९ ॥

क्षीणेंदुर्कयमारराहुशिखिनः पापा बुधस्तैर्युत इति सप्तैव पापाउक्ताः तथाखिलकेंद्रगाश्चेत् क्रूराइत्यादिना सप्तैव स्थानान्यप्युक्तानि ततः सतिसंभवे क्रमनियमपरित्यागे मानाभावात्प्रत्येकमेकैकक्रूरग्रहणमविरुद्धम् ॥ २७ ॥ अथ मातुरनिष्टयोगौ यमे धने इत्यादिरेकः गोद्वंद्वकन्येत्यादिर्द्वितीयः ॥ २८ ॥ द्वयोरेव पित्रोरनिष्टयोगः धनेग्विनेति अत्रयोगे जातो जन्मतः प्राक् पितुर

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

निष्टकरः जन्मोत्तरंतु भातुरित्यर्थः । अथ तातधनभोगाभावयोगः कुंभेयमे इतिस्पष्टम् ॥ २९ ॥ अथ स्वकर्मणामल्पफलकत्व योगः स्वक्षत्रइति कर्मस्थानं पश्यन् भौमो यत्र कुत्रापि स्वराशौ बुधशुक्राभ्यांसहितः स्यात्तदा सत्कर्मणामल्पं फलं ज्ञेयम् अत्र पाठोपि सवित्सितः कर्मफलाल्पतायै इति युक्तः अन्यथाऽल्पादनायासादेव कर्मफलसिद्धचर्थकत्वे विवक्षितार्थानुपपत्तिः स्यात् अथ जातस्य बंधुत्रितययोगः राहाविति ॥ ३० ॥ पुनरल्पायुर्योगः स्मरेकुजे इति स्पष्टम् । वधबंधनयोगः धनेइति धने शुक्रे तनौ

स्वक्षेत्रआरोयदिकर्मदर्शीसवित्सितःकर्मफलप्रदोल्पात् ॥ राहौतृतीयेधनगेचजीवेसज्ञेचबन्धुत्रयभाङ्नरः स्यात ॥ ३० ॥ स्मरेकुजेभाग्यगतेदिनेशेसितेष्टमेल्पायुरिहप्रजातः ॥ धनेसितेब्जेतनुगेज्ञरव्योर्व्ययेसुतेगौव धबन्धभाक्स्यात्॥३१॥चेद्धनस्थानआरोयमेनान्वितःस्यादगुर्भ्रातृगोभ्रातृहानिप्रदः॥ भाग्यगौचेद्यमेन्दूचभा र्यातदास्यासतीतौस्त्रियाभाग्यगौचेन्नरः ॥ ३२ ॥ द्वादशेलग्नतोमीनगश्चेद्रविर्दक्षनेत्रार्त्तिकृद्रात्रिपोन्याक्षिहा ॥ पञ्चमेस्तङ्गतश्चेत्कुजोवासितः स्यात्तदाचक्षुषाकाणएवस्फुटम् ॥ ३३ ॥

चंद्रे ज्ञरव्योर्व्ययेसतोः सुतेराहौ पुरुषो वधबंधभाक् ॥ ३१ ॥ भ्रातुरनिष्टयोगः चेदिति कुजशनीधने राहुस्तृतीये चेद्भ्रातृहानिर्वा च्या अथ दंपत्योर्व्यभिचारयोगः भाग्यगाविति पुरुषस्य भाग्यगौ शनिचंद्रौ चेत्तस्य भार्याऽसती वाच्या अथ तौ शनिचन्द्रौ स्त्रिया भाग्यगौचेन्नरो व्यभिचारकर्त्ता ज्ञेयः ॥ ३२ ॥ अथ नेत्रविकारयोगः द्वादशे इति मेषलग्ने जातस्य द्वादशेमीनगो रविश्चेद्दक्षिणनेत्रार्ति



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

कृत चंद्रश्चेद्वामनेत्रार्तिकृत् अथ काणत्वयोगः पंचमेइति पंचमेकुजः शुक्रोवाऽस्तंगतोऽर्कलुप्तकिरणत्वाददर्शनं गतस्तदा चक्षुषा काण एव स्फुटं निश्चयेन विकारलक्षकत्वार्थिका चक्षुषेतितृतीया अत्र त्रिष्वपि योगेषु योगकारकग्रहाणां पापसंबंधदौर्बल्यादिकमपेक्षितम् ॥ ३३ ॥ अत्रैव योगांतरं सिंहलग्नेइति सिंहलग्नेशुक्रः कर्कें शनिश्च तौ द्वावेवपीडाकरौ। योगांतरं स्वव्ययेति अत्रचतुर्णामेवयोगहेतुत्वात् युगपद्योगचतुष्कस्यदुर्विवेकत्वात् तेषुप्रबलस्यैव विशेषतो दोषेणचक्षुर्हानिर्वाच्येति ॥ ३४ ॥ पुनः पित्राद्यरिष्टयोगः पापइति

सिंहलग्नेसितोवायमोवाव्यये नेत्रपीडाकरौमानवानांमतौ ॥ स्वव्ययार्यष्टमेषुक्रमाद्भूमिजार्कीन्दुसूर्येषुत
त्तद्दुजाक्ष्णोः क्षयः ॥ ३४ ॥ पापोर्काद्दशमेऽर्कभेशदशमेशौपीडितौचेत्पितुः कष्टंवानिधनंतथाखलखगा
न्तःस्थेन्दुतोम्बुवाद्रिगाः ॥ पापाश्चेद्विबलेविधौगतरुचिर्मातुर्नजातःशुभः पापाश्चेत्सहजेकुजात्कुजसहोत्थौ
दुर्गतौनश्रिये ॥ ३५ ॥

सूर्याद्दशमेपापः तथार्कभेशदशमेशौपापैर्योगदृष्ट्यादिनापीडितौस्तस्तदा जातस्यशिशोः पितुःकष्टंनिधनं वा वाच्यम् एवं खलग्रहमध्यस्थचंद्राच्चतुर्थसप्तमस्थाः पापाः स्युश्चंद्रश्च दुर्बलः तदा मातुरनिष्टाय शिशुः स्वयंच नष्टकांतिर्भवतीत्यर्थः एवं कुजात्सहजेतृतीये पापाः तथा सहजस्थानंतत्स्वामीवाकुजश्चनीचगत्वास्तत्वादिनादुर्गतो तदाजातशिशोः भ्रातृविक्रमादिश्रियेनस्युरित्यर्थः ॥ ३६ ॥

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

सं०नि० ॥३५॥

अथ मातुलाद्यरिष्टयोगः ज्ञादिति बुधात्षष्ठेखलाःस्वयंबुधोनीचोगतबलश्चतथाबुधात् षष्ठेशोप्यसन् तदा मातुलवंशच्छेदादिनामातुल दुःखप्रयुक्तदुःखादिनावाबालोमातुलदुःखभाक् । एवं पुत्राद्यरिष्टयोगः अथगुरोरिति गुरोः पंचमे खलाः नीचारिभस्थत्वादिना गुरो स्तथा जन्मलग्नात्पंचमेशस्य च दौःस्थ्ये गुरुतः पंचमेशस्य च दौःस्थ्ये पुत्रादिदुःखभाक् नात्मजसुखमित्यनेन कृत्रिमापत्यसुखं सूचितं तथा शुक्रादंगनाप्येवं विचार्या तथाहिशुक्रात्सप्तमेऽनिष्टाःशुक्राल्लग्नाच्चसप्तमेशयोर्दौःस्थ्ये जायासुखाभावः एवं शनेरायुरपि

सटी० सं० ३

ज्ञात्षष्ठे च खलाबुधोगतबलोनीचस्तदीशोप्यसन् बालोमातुलदुःखभागथगुरोःपुत्रेखलादुःस्थितात् ॥
दुःस्थेऽपत्यपतौचनात्मजसुखंशुक्रात्तथाह्यङ्गना मन्दात्पुष्टखलामृतौतदधिपेदुःस्थेतदाशुक्षयः ॥ ३६ ॥

मंदादिति शनेरष्टमे पुष्टाः पापाः तथालग्नान्मंदाच्चाष्टमेशयोर्दुःस्थत्वंचेदष्टमस्थानयोरपि पापदृष्टिकर्त्तर्य्यादिनाऽसत्त्वं चेत्तदाऽऽयुषो हानिर्वाच्येतिअत्रपूर्वैरप्युक्तम् । राहुश्चेदथवाकेतुर्लग्ने कामेव्ययेऽष्टमे ॥ मारकेशान्मदेवापिमारकेशेनवायुतः । मारकः सतुविज्ञेयो दशास्वं तर्दशासुच ॥ वृश्चिके मकरे जन्मभाजो राहुर्मृतिप्रदः । षष्ठाष्टरिष्फगोराहुस्तद्दायेकष्टदोभवेदिति अत्र मारकास्तु ॥ अष्टमंह्यायुषः स्था नमष्टमादष्टमंचयत् ।तयोरपिव्ययस्थानं मारकस्थानमुच्यते ॥ इति तेन द्वितीयसप्तमस्थास्तदीशावातत्संबन्धिनो वा मारकाइति ॥३६॥ ॥३५॥

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

अथ प्रसंगात्संततिसुखयोगस्तद्विशेषयोगश्च संतानभमिति जन्मलग्नात्पंचमभावलग्नं स्वपतिशुभोभययुक्तदृष्टं सद्वीर्यंस्थान कालनिसर्गचेष्टादृग्दिग्बलोपेतं जन्मलग्नं चैवंविधं चेत्तदात्मजमेधादिसुखं वाच्यम् आद्यगर्भे पुत्रः कन्या वेति जिज्ञासायामाह लग्नेश्वर इति लग्नेशेतनुधनपुत्रगते आदौ पुत्रः तस्मिन् सुखगते सुतकन्ये क्रमात् कन्यापुत्रौवेति ॥ ३७॥ पुत्रसुखाभावयोगः तनुधने तिस्पष्टं तत्रापि पंचमे गुरुभं गुरुराशिश्चेत्तदा प्रथमापत्यक्षयः पुनः सएव राशिः स्वामियुतेक्षितस्तदा सुतसौख्यकरः ॥२८॥ अथस्व

सन्तानभं स्वपतिदृष्टयुतं शुभाढ्यं सद्वीर्य्यसङ्गमपिचेत्सुखमात्मजादेः॥लग्नेश्वरेङ्गधनपुत्रगतेसुतःस्यादादौ सुखेसुतसुतेचसुतासुतौवा ॥ ३७ ॥ तनुधनव्ययसोदरपुत्रगः सहजपोयदिनात्मजसौख्यकृत ॥ सुतगतेगु रुभेप्रथमक्षयः पतियुतेतुपुनः सुतसौख्यकृत॥३८॥नीचेगुरौवाभृगुजेतथौजे भानौसमेज्ञेनसुतःस्ववीर्यात ॥ कर्केविधौपापयुतेक्षितेकैंमन्दे क्षितेन्त्यायुषिपुत्रलाभः ॥ ३९ ॥ जनुस्तनौपापयुतेचपापभेरवावलौयुग्मभगे क्षितेः सुते ॥ सुतोस्यमध्यायुषिसेज्यभार्गवेङ्गगोज्ञमन्दौ यदिनात्मजश्रियः ॥ ४० ॥

क्षेत्रे परवीर्यात्पुत्रोत्पत्तियोगः नीचे इति गुरौ शुक्रे वा नीचे भानौओजेविषमराशिगे बुधे समराशिगे तदा स्ववीर्यात्पुत्राभावः किंतुप रवीर्यादेव । कदा पुत्रलाभ इत्यत आह कर्केइति पापयुतेक्षिते कर्कगे चंद्रे सूर्येच शनिदृष्टे सति वा अंत्यायुषि आयुषस्तृतीये भागेपुत्रलाभोवेत्यर्थः ॥ ३९ ॥ यदि लग्ने पापयुक्तः पापस्यैवराशिःसूर्येच वृश्चिकस्थे भौमेयुग्मभे तदामध्यायुषि तादृश

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

पुत्रलाभः । तादृशपुत्रस्याप्यभावयोगमाह सेज्येति उभौ गुरू एकस्थौ बुधमंदौ चलग्ने तदानात्मजसुखमिति ॥४०॥ अथाशुभयोगः नीचेइति उच्चग्रहास्त्रिकस्थाः नीचाः शुभभावगास्तदाऽशुभयोगः । संतानसंख्यायोगमाह सोदर्यगे बुधे तृतीये पुत्रद्वयं कन्यात्रयंच बलवति सुरगुरौ तृतीयगे पंचपुत्रानेवाहुः ॥ ४१ ॥ सोदरेष्टानिष्टयोगः सागाविति सराहौ चंद्रे तृतीये सहजाभावोधनंच सार्कौ सशनौ चंद्रेश्यामतनुः सहजरहितश्च कालश्यामलमेचका इत्यमरः । पुत्रेष्विष्टानिष्टयोगः पुत्रर्क्षगे इति स्पष्टम् ॥ ४२ ॥

नीचे त्रिखाम्बुमदगाः खनवाप्तिगाश्च तुङ्गेन्त्यषष्ठमृतिगानशुभायजन्तोः ॥ सोदर्यगेविदितनोः सुतयुग्ममाहुः कन्यात्रयंसुरगुरावपिपञ्चपुत्रान् ॥ ४१ ॥ सागौविधौसहजगेऽसहजोधनीचसार्कौ चमेचकतनुः सहजैर्वियुक्तः ॥ पुत्रर्क्षगेसहजगेचकुजेविपुत्रः कामेभृगौबलिनिसद्विविधाङ्गजश्रीः ॥ ४२ ॥ त्रिकेसुतेशेविबलेनपुत्रवान् गुरोःसुतेशेपितथातथाविधे ॥ सुतेर्कवक्रौनशुभौतथार्क्यगूतदाचवंशे शरुपात्मजक्षयः ॥ ४३ ॥

पुत्रभावप्रयोजकयोगविशेषादीनाह त्रिकेइति सुतेशे त्रिके षष्ठाष्टमांत्यगते दुर्बलेच पुरुषः पुत्रापत्यहीनः एवं गुरोः पंचमेशेपि तथाविधे त्रिकादिस्थे तथा पुत्रसुखरहितः एवं सुते पंचमेऽर्कशुक्रौ न शुभौ संततिसुखनाशकावित्यर्थः एवम् आर्क्यगू शनिराहू पंचमे तथा पूर्वोक्तफलौ परंत्वत्र सर्वेषु योगेषु पापदृष्टयाद्यपेक्षा अत्र निवृत्तिप्रतियोगितया संतानसुखप्रतिबंधकविशेषजिज्ञासा



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

यामाह तदाचेति शनिराहू सुते चेत् वंशेशकोपात्संतानसुखाभावः तेन वंशेशाराधनात्तत्सुखम् ॥ ४३ ॥ प्रतिग्रहमुपायविशेषानाह ज्ञ शुकेति अगोर्दोषे कन्यां शिखिनो दोषे गां यच्छतइत्यर्थः ॥४४॥ रवेरिति हरिवंशस्य विधिना श्रवणात् रविकृतप्रतिबंधनिवृत्तिः स मेषु सर्वेषु दोषेषु संतानमुकुंदवन्दनात् संतानगोपालमंत्रस्य यथाविधिकृतानुष्ठानात् एवं मदनव्रते कामव्रतेपि विधिनानुष्ठिते सकलप्रतिबंधनिवृत्तिः ॥ ४५ ॥ अथ कांश्चित्परिचितान् राजादिसद्योगविशेषान् दर्शयति अथातइति अथ असद्योगनिरूपणानंतरं

ज्ञशुक्रदोषेशिवपूजनात्सुतः शशीज्ययोरौषधयन्त्रमन्त्रतः ॥ अगोःसुतांगांशिखिनश्चयच्छतोयमारयोः स्याद्द्विरिशाभिषेचनात ॥ ४४ ॥ रवेस्तुदोषेहरिवंशसंश्रवात् समेषुसन्तानमुकुन्दवन्दनात ॥ सुतोद्भवः स्यात्क्षितिजार्कयोर्व्रते कृतेविधानान्मदनव्रतेध्रुवम ॥ ४५ ॥ अथातः सद्योगाः सितगुरुबुधाश्चेज्जनि तनौ समस्ताव्यस्तावाशुभफलकरादोषविधुराः ॥ तथारो व्योम्न्येवंयदिरविजइन्दुश्चतनुगौ त्रिकोणे जी वार्कावपिनृपतियोगोयमुदितः ॥ ४६ ॥

सद्योगानां जिज्ञासायां सद्योगा उच्यंते इति शेषः तथाहि जनितनौ जन्मलग्ने सितगुरुबुधाः समस्ताः सर्वे संभूय एकराशिस्थाः मीन धनुःकर्ककन्याद्यन्यतमस्थाः यद्वा व्यस्ताः पृथक् पृथक् मीने तुलायां वा शुक्रः मीने कर्के धनुषि वा गुरुः कन्यायां युग्मे वा बुधः परंतु दोषैः पापाक्रांतत्वनीचगत्ववक्रत्वास्तत्वादिभिर्विधुरा रहिताः संतः शुभफलकरा ज्ञेयाः अथापरोराजयोगः तथारइति भौ

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

मे व्योम्नि दशमे एवं साधिकारो भौमो दोषविधुरश्चेत् योगकृत एतत्सहकारिण आह यदीति यदि शनिश्चंद्रश्चोभौ लग्नगौ तथा त्रिकोणे नवमपंचमस्थौ जीवार्कौस्तस्तदा भौमो योगकर्तेत्यर्थः ॥ ४६ ॥ पुनस्तथा राजयोगद्वयमाह चरेंगइति जन्मलग्नेचरे सति सर्वेषु त्रिषु वा केंद्रेषु स्वतुंगस्थाग्रहाः स्युस्तदा राजयोगः परंतु लग्ने यदि दोषरहितः कोपि ग्रहो न स्यात्तदा नायं योग इत्यर्थः इत्येको योगः द्वितीयमाह चतुष्केंद्रेष्विति चतुर्ष्वेव केंद्रेष्विष्टा उच्चमित्रत्रिकोणस्थत्वादिगुणवंतः शुभग्रहाः अत्रापि दोषविधुरत्वमपेक्षितं तथा खलग्रहा द्वादशषष्ठस्थास्तदाऽस्मिन् योगे जातश्चामरादिनानाराजलक्षणैर्युतः ख्यातः सर्वत्र प्रसिद्धो नृपः स्यादित्य

चरेङ्गे सर्वेषुत्रिषुचयदिकेन्द्रेषुखचराः स्वतुङ्गस्थायोगोभवतिनृपतेःसग्रहतनौ ॥ चतुष्केन्द्रेष्विष्टाव्ययरिपुगृहस्थाः खलखगास्तदाख्यातश्चिह्नैर्युतउतनृपश्चामरमुखैः ॥४७॥ लग्ने च वर्गोत्तमगेथवेन्दौचतुर्मुखैर्वीन्दुखगैश्चदृष्टे ॥ नृपालयोगाविधिनानिरुक्तावेशिस्थसौम्यैः सखगैश्चकेन्द्रैः ॥ ४८ ॥

र्थः ॥ ४७ ॥ अथ वक्ष्यमाणयोगेष्वनुगतं राजयोगं दर्शयति लग्नेचेति जन्मलग्ने चंद्रे वा वर्गोत्तमनवांशस्थे वर्गोत्तमाश्चरगृहादिषु पूर्वमध्यपर्यंतगाः शुभफला नवभागसंज्ञाइत्युक्तसंज्ञनवांशगे चंद्रं विना चतुर्भिः पंचादिभिर्वाग्रहैर्दृष्टे विविधा राजयोगानिरुक्ताः परंतु वेशिस्थसौम्यैः सद्भिः चन्द्राद्द्वितीयस्थानस्थैः सौम्यैः सौम्यग्रहान्याप्रयुक्ते वेशियोगसद्भावे इत्यर्थः तथा केंद्रैः सग्रहैर्ग्रहाविधुरैरित्यर्थः तदुक्तं वर्गोत्तमगतेलग्नेचन्द्रेवाचन्द्रवर्जितैः चतुराद्यैर्ग्रहैर्दृष्टे नृपा द्वाविंशतिःस्मृता इति । तथा शुभवर्गोत्तमे जन्मवे

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

शिस्थानेच सद्गहे अशून्येषुच केंद्रेषुकारकाख्यग्रहेषु चेत्यपि ॥ ४८ ॥ राजयोगांतरं कुंभाजोक्षस्विति क्रमेण कुंभमेषवृषेषु शनि रवि चन्द्रसहितेषु सत्सु एष्वेवान्यतमस्मिन् लग्ने योगः स्यात् अन्यतमशब्दस्यसर्वादिगणेपाठाभावेपिडतमप्रत्ययांतोयं योगांतरं ज्ञा रेज्यैरिति क्रमेण ज्ञारेज्यैर्मिथुनालिहरिस्थैरिति द्वितीयः पुनर्योगांतरं वान्यइति सचंद्रभौमे हितलग्ने मेषमीनाद्यन्यतमलग्ने अन्य स्तृतीयोराजयोगः ॥ ४९ ॥ पुनर्योगाः तुंगेंगेइति लग्ने उच्चगे चन्द्रे एकोयोगः लग्ने उच्चगे शनौ द्वितीयः वृषलग्ने प्रथमः तुलालग्ने द्वि

कुम्भाजोक्षसुसार्किरवीन्दुष्वेष्वङ्गेकुभृतोन्यतमस्मिन् ॥ ज्ञारेज्यैर्मिथुनालिहरिस्थैर्वान्यः सेन्दुकुजेहित लग्ने ॥ ४९ ॥ तुंगेङ्गेऽब्जउतयमेस्त्रियांबुधार्कौ योगौसेशवणिगजौयदोच्चगेज्ये ॥ सार्केन्दौधनुषिवृषांग उच्चगेस्तेऽनथोपञ्चादिबलिभिरुच्चगैश्चभूपः ॥५०॥ सेन्द्वार्कौमदनगतेगुरौधनुःस्थे तुंगेंगे दिवसकरेनृपोऽपरः स्यात् ॥ चन्द्राद्यैश्चसहजषण्नवव्ययस्थैर्मन्देंगे मकरगतेगुणीनृपालः ॥ ५१ ॥

तीय इत्यर्थः परंतु यदा कन्यायां बुधार्कौ भवतः तथा वणिगजौ सेशौ तुलायां शुक्रः मेषे भौमश्च तथा कर्के गुरौ सतीति योगद्वयं तदाज्ञेयं योगांतरं सार्केंदाविति वृषे जन्मलग्ने सार्के चन्द्रे धनुषि धनुर्द्धरस्थे उच्चगेस्ते मकरे भौमेचेत्यर्थः अथो योगांतरं पंचादिभि र्बलिभिर्ग्रहैरुच्चगैः सद्भिर्भूपो भवतीति ॥५० ॥ अथ योगांतरं सेंद्वार्काविति चंद्रसहिते शनौ मदनगते सतमभावस्थे तथा गुरौ धनूरा शिस्थे तथा उच्चगे लग्ने सूर्ये सति नृपः स्यात् अयं योगो मेषलग्ने निष्पद्यतेपुनर्योगांतरं चन्द्राद्यैरिति चन्द्राद्यैः क्रमेण सहजषण्नव

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

व्ययस्थैः चन्द्रः सहजेभौमः षष्ठे बुधो नवमे गुरुर्द्वादशे एवं क्रमेण स्थितैः परंतु मंदे शनौ मकरलग्नगते सति गुणवद्राजयोगोयमिति ॥ ५१ ॥ तथा राजयोगांतरं तुंगेङ्ग इति शशभृति चंद्रे द्विजराजः शशधर इति कोशात् तथाच चंद्रे वृषलग्नगे सति तथाक्रमेणसूर्यजीवमंदैः रविगुरुशनिभिः अंबास्तांबरसहितैः सद्भिः सूर्यश्चतुर्थ सिंहे गुरुः सप्तमे वृश्चिके शनिर्दशमे कुंभे च चेत्तदा भूपो भवति पुनर्योगद्वयं तुंग इति उच्चे लग्ने चेत् बुधशुक्रयोरन्यतरस्य सत्त्वे योगद्वयं कन्या लग्ने बुधे तत्रस्थे सत्येकः मीनलग्ने शुक्रे तत्रस्थिते

तुंगेङ्गेशशभृतिसूर्यजीवमन्दैरम्बास्ताम्बरसहितैः क्रमेणभूपः ॥ तुंगेङ्गेबुधसितयोर्मृगाद्यखण्डे भौमेधन्विनिसविधौगुरौ च योगौ ॥ ५२ ॥ बुधेकन्यालग्ने शशिगुरुसिताश्चेद्धिबुकगाः सुतस्थौवक्रार्कौ भवतिनरपालोगुणयुतः ॥ समंदार्कारैः स्याद्धटहरिमृगैः सेन्दुतनुगे झषेथाजांगेस्रेसगुरुशशिभेंगेपिचनृपः ॥ ५३ ॥

सति द्वितीयः उभयत्रैव मृगाद्यखंडे भौमे धन्विनि सचंद्रे गुरौ च सति तदा योगौ भवतः ॥ ५२ ॥ पुनर्योगांतरं बुधेति अस्मिन्योगे उत्कृष्टगुणवान् राजा जायते इत्यर्थः । पुनर्योगत्रयं समंदेति सेंदुतनुगेझषे मीनलग्नस्थेचंद्रे इत्येकः अजांगेस्रे मेषलग्नस्थे भौमे इति द्वितीयः । सगुरौ कर्कलग्नेइति तृतीयः । योगत्रयेपिसमानमंगमाह समंदेतिघटहरिमृगैः क्रमेण समन्दार्कारैः



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

सद्भिरित्यर्थः ॥ ५३ ॥ अथोत्कृष्टराजयोगौ कर्केइति कर्के गुरौ लग्नस्थे सचंद्रशुक्रे बुधे आयस्थे मेषे रवौ दशमस्थेजातः पृथुबलः परपराभवकारिसेनावान् राजेत्येकः मृगराशेः पूर्वार्द्धे लग्नस्थे शनौ सति क्रियकर्कसिंहतुलामिथुनेषु सपतिषु सत्सु जातःसन्नृपःबलिष्ठ उत्कृष्टोराजास्यात् अच्छः शुक्रःघटस्तुला शेषंस्पष्टम् ॥ ५४ ॥ पुनर्योगांतरं स्वोच्चेइति कन्यालग्नेबुधे शुक्रचंद्रौदशमे गुरौसप्तमे आर्क्यसृजोः शनिभौमयोः पंचमे सतोः नृपालोभवति ॥ अथधनिकयोगः चेदिति क्रमेणदशमायलग्नगाःचंद्रशनिगुरवः बुधभौमावु

कर्केङ्गइज्ययुजिसेन्दुसितज्ञआयेजेर्के नृपःपृथुबलोथमृगाद्यखण्डे ॥ लग्ने शनौ सपतिषुक्रियकर्कसिंहे

ष्वच्छेघटे मिथुनगेविदिसन्नृपःस्यात् ॥ ५४ ॥ स्वोच्चे बुधेतनुगतेससितेम्बरेब्जे सेज्ये मदेचसुतआर्क्य

सृजोर्नृपालः ॥ चेदम्बरायतनुगाविधुमन्दपूज्याज्ञारौधनेरविसितौहिबुकेधनीस्यात् ॥ ५५ ॥ ग्रहेस्वोच्चके

न्द्रे नरपतिसमः स्यात्समुदिते तनोरर्केज्यौचेत्सुतभवनगौशास्त्रधनवान् ॥ बलीसौम्योलग्नेसधनपतिके

न्द्रेचशुभकृत्खलःषष्ठेकेन्द्रेसशुभइहविद्यार्थसहितः ॥ ५६ ॥

भौ धने रविशुक्रौ चतुर्थेचेत् जातोधनीस्यात् ॥५५ ॥ अथोपरानयोगः ग्रहेइति एकस्मिन्नपिग्रहे केंद्रेस्वोच्चस्थे समुदिते अस्तत्वादिदो परहिते बलवतिचसतिजातः पुरुषोराजसदृशःस्यात् अथ शास्त्रधनोभययोगः तनोरिति लग्नात्पंचमे अर्केज्यौचेत् पुरुषःशास्त्रधनोभ यवान् । शुभयोगः बलीति बलिष्ठोबुधोलग्नेचेत् सधनेशे केंद्रेसतिनरः शुभकृत् सत्कर्मकर्त्ता । विद्यार्थयोगः खलइति पापग्रहः षष्ठे

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

सं०नि० चेत्केंद्रेसशुभग्रहेसति जातोनरोविद्यार्थाभ्यांसहितः ॥ ५६ ॥ पुनर्धनप्रतिष्ठायोगौ राहुरिति कन्यायां शनिशुक्रकुजसहितोराहुर्यस्य सटी०
॥३९॥ जन्मनि स्यात् स धनवान् ज्ञेयः एवं नीचग्रहाग्रजन्मलग्नादेकादशदशमद्वितीयतृतीयेषु सर्वेष्वेवस्युस्तदाराजसमप्रतिष्ठावान्ज्ञेयः॥५७॥ सं० ४
प्रतिष्ठावत्त्वेपि तत्रोत्कर्षयोगमाह अपापाविति केंद्रत्रिकोणेशौ यद्यपापौ पापसंबंधदोषाभ्यांरहितौ परस्परस्य परस्परक्षेत्रगामिना
वपि केंद्रकोणगावेवसंबद्धौवा केंद्रत्रिकोणान्यतरस्थौ एकक्षेत्रगौ भवतः तदा योगपोषौ योगं पुष्णीतः तत्रादिव्योमभाग्यपाववश्यम

राहुः समन्दाच्छकुजः सुतायांचेदत्रजातः पुरुषोधनीस्यात्॥नीचायदिप्राप्तिनभोद्वितीयतृतीयगाभूपसम
स्तदास्यात् ॥५७॥ अपापौकेन्द्रकोणेशावन्योन्यंकेन्द्रकोणगौ ॥ सम्बद्धौवायोगपोषौविशेषाद्व्योमभाग्य
पौ ॥५८॥ निजाग्रजातात्मजघासिरामकृते हि सङ्केतनिधौ कृतेस्मिन्॥ज्योतिर्विदारामदयालुनाम्नाप्रकी
र्णसङ्केत इतः समाप्तिम् ॥ ५९ ॥ इति तृतीयसङ्केतः समाप्तः ॥३॥ ॥ अथभावफलंविलिख्यते श्रितस
द्क्षेपमदीच्यशास्त्रतः ॥ सकलग्रहवीक्षणात्फलं सकलं लग्नविधूतराज्यदौ ॥ १ ॥

त्रापेक्षितौ तौ बलान्वितौ परस्परं संबद्धौचेदवश्यमुत्कृष्टतद्योगकारकौ भवतएवेति ॥ ५८ ॥ संकेतसमाप्तिसूचकोनिजाग्रजातेति
श्लोकःस्पष्टार्थः ॥ ५९ ॥ इति तृतीयप्रकीर्णसंकेतव्याख्या समाप्ता ॥ इदानीं चतुर्थसंकेते लग्नादिद्वादशभावानां फलं निरूपयितुं प्रति ॥३९॥
जानीते अथेति अथ सदसद्योगादिनिरूपणानंतर जिज्ञासितभावफलबोधकवाक्यानिविलिख्यंते स्वकपोलकल्पितत्वशंकाभंगा

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

याह उदीच्यशास्त्रतइति पूर्वशास्त्रप्रसिद्धमेव संक्षिप्य लिख्यते इत्यर्थः सामान्येनज्ञातेएव विशेषजिज्ञासोदयात् सर्वेषांभावानांसामा न्यतः फलनिरूपणप्रकारः सकलेति यस्यकस्यापि भावस्य सकलग्रहदृष्टिविषयत्वेहि तदुक्तसकलफलावश्यंभावः लग्नचंद्रमसोस्तु ततोविशेषमाह लग्नविधूइति सकलग्रहदृष्टाविति शेषः शेषं स्पष्टम् ॥ १ ॥ प्रथमभावे निर्देश्यसदसत्फलकपदार्थानाह रूपंवर्णइति अंबापिता मातामहः तातमाता पितामही स्पष्टमन्यत् ॥ २ ॥ प्रसंगाल्लग्नचंद्रमसोः पुनः शुभयोगंनिर्दिशति लग्नाच्चंद्रादिति ल

रूपं वर्णः साहसं देहमानं चिह्नं जातिः सौख्यदुःखे नराणाम् ॥ मूर्द्धादेहोम्बापिता तातमाता सर्वं बुद्ध्यैवा द्यभावेविचिन्त्यम् ॥ २ ॥ लग्नाच्चन्द्राद्वारिरंध्रास्तसंस्थाः सर्वे सौम्याःक्रूरदृग्योगहीनाः ॥ यस्यासौस्याद्दी र्घराज्यार्थभोगीलग्नेसौम्याः सत्फला नाशुभाःस्युः ॥ ३ ॥ लग्ने शुभे स्थूलतनुर्बलिष्ठेशीतामयीन्दौ तु ख लेक्षिताढ्ये ॥ लग्नस्य पूर्वापरभागपापे दुःखंक्रमान्मूर्द्धनिवामदक्षे ॥ ४ ॥

ग्नाच्चंद्राद्वायदिसौम्याः सर्वेग्रहाः षष्ठसप्तमाष्टमस्थाः क्रूरग्रहदृष्टियोगविरहिताः स्युस्तदापुरुषोदीर्घराज्यार्थभोगीस्यात् तयोःशुभसं बंधेशुभमशुभग्रहसंबंधेऽशुभंपरंतु लग्नेविशेषात् ॥ ३ ॥ लग्नेविशेषांतरंदर्शयति लग्ने शुभे इति लग्नस्येति लग्नस्यपूर्वभागस्थे पापेसतिमूर्द्धनि शिरसिवामभागे पीडादुःखादिकंवाच्यम् अपरभागे पश्चिमभागे पापे सति शिरसि दक्षिणभागे तद्वाच्यम् ॥ ४ ॥

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

ग्रहविशेषाधीनं ;तत्रैव फलविशेषमाह खलैरिति खलैर्लग्नस्थैः शिरसिक्षतादिकम् । लग्ननवांशपतुल्यतनुःस्याद्वीर्ययुतग्रहतुल्य तनुर्वा । चंद्रसमेतनवांशपवर्णः कादिविलग्नविभक्तभगात्रइति । बृहज्जातके तथा कंदृक्श्रोत्रनसेत्यादि द्रेष्काणानुरोधेनापि त त्तदंगसदसत्त्वोक्तेश्च अब्जेन चंद्रेण जलार्त्तिर्वाच्या । शुभैःशुभफलं लग्नेधिकारिणि भौमेसति पुरुषो जरस्यपि वृद्धत्वेपि युवायते युवेव लंपटः शक्तश्च भवति विदाबुधेन यौवनेपि बालायते बालइव क्रीडाद्यासक्त इत्यर्थः ॥ ५ ॥ शरीरे चिह्नज्ञानायाह एवमिति

खलैःशिरःस्थैः क्षतविक्षतं शिरोजलार्त्तिरब्जेन शुभैःशुभाप्तयः ॥ जनोजरस्यप्यसृजायुवायतेविदातुबा लायतएवयौवने ॥ ५ ॥ एवंयत्राङ्गेर्कभौमौभवेतांरक्तोंकस्तत्रासितश्चेद्यमागू ॥ मिष्टं मृष्टंवक्तिभुंक्तेचपूज्ये स्वांगस्थेज्ञेतूवरस्यप्रियःस्यात् ॥६॥ क्षाराम्लयोःस्वांगगयोःसिताब्जयोः प्रियोगुकेत्वार्किषुतीक्ष्णवस्तुनः॥ तनौकुजार्कौयदिवाशनिस्तदानरःसदम्भोव्यसनी कटुप्रियः ॥ ७ ॥

साधारण्येन यत्र यस्मिन्नंगे सूर्यभौमौ भवेतां तत्र रक्तोंकः रक्तंचिह्नम् । तत्र यमागू शनिराहू चेत् तदाऽसितोऽङ्कः स्वांगस्थे मुख हृदयान्यतरगे पूज्ये गुरौसति मिष्टं मधुरं मृष्टम् उज्वलं शुद्धं सदाचारशास्त्राद्यविरुद्धं वक्ति भुंक्तेच यद्वा मिष्टं वक्ति मृष्टं भुंक्ते इति क्रमेणान्वयः । तत्र स्वांगस्थे बुधेसति पुरुषस्तूवरस्य कषायस्य अश्मश्रोर्वा प्रियःस्यात् तूवरोऽश्मश्रुपुरुषे प्रौढाशृंगारकेपिच ॥ पुरुषे व्यंजनत्यक्ते स्यात्कषायरसेपिचेति मेदिनी ॥ ६ ॥ क्षारेति सितचंद्रयोः स्वांगगयोः क्षाराम्लप्रियः अगुकेत्वार्किषु तीक्ष्ण



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

वस्तुनः मरीचादेः प्रियः वाङ्मनसोरपि । ग्रहकृतं विशेषमाह तनाविति कुजार्कयोः शनेर्वा लग्नस्थत्वे नरः सदंभः पाखंडकृत् व्यस नी द्यूतपुंश्चलत्वमद्यपानादिकर्त्ता कटुप्रियः कटुवचनभाषणशीलः यद्वा कटुवस्तुप्रियः ॥ ७ ॥ शुभैरिति लग्नेशे शुभग्रहे बलिनिसति लग्ने शुभैरुपेतेच चिरायुः स्यात् अनधिकारिखलयुते लग्ने तु गतायुः तत्रकुजार्कयोस्तृषितःस्यात् लग्ने पापर्क्षेसति गुरुविध्वोः पापयोगेच शिरोरुजाभिभूतः स्यात् ॥ ८ ॥ इति लग्नभावः ॥ अथ द्वितीयभावफलविवक्षया तत्र विचार्यस्थानपदार्था

शुभैश्चिरायुस्तनुगैःशुभेंगपे खलैर्गतायुस्तृषितःकुजार्कयोः ॥ खलर्क्षलग्नेसखलेगुरौविधौनरःपरंमूर्द्धरुजाभिभू यते ॥८॥ इतिलग्नभावः ॥ धनंद्वितीयंचकुटुम्बसंज्ञंकोशोक्षिसंज्ञं पुरुषस्यवक्त्रम् ॥ वाणीशुभानांक्रयविक्रयाख्यं सुवर्णमुक्तारजतादिधाम॥ १ ॥ धनेशलग्नेशयुताः शुभाश्चेद्धनस्थितास्तत्फलमेवदद्युः ॥ शुभाढ्यदृष्टेस्वसुखंशु भावाब्जनिःस्वोब्जदृष्टेविदिवात्रपापे ॥ २ ॥ एवंकृशोब्जोधनगोज्ञदृष्टोधनक्षयायैव सितस्तदाप्त्यै ॥ रोगोत्थ चिह्नंमुखगोयदार्कः सस्त्रीग्रहश्चेत्कटुवाक्कृशस्वः ॥ ३ ॥

न् निर्दिशति धनमितिस्पष्टम् ॥ १ ॥ धनेशेति शुभैराढ्ये दृष्टेच द्वितीयभावेसति स्वसुखं धनसुखम् अब्जेन चन्द्रेण दृष्टे बुधे धनस्थे अथवा पापे धनस्थे सति पुरुषो निर्धनःस्यात् ॥ २ ॥ एवमिति एवंभूतः क्षीणो बुधदृष्टश्चंद्रो धनगो धनक्षयाय सितस्तु तदाप्त्यै तथा मुखगः धनगःसूर्यश्चेद्रोगजचिह्नं स सस्त्रीग्रहःशशिशुक्रयुक्तश्चेत् शशिशुक्रौ युवतीनराश्च शेषा इत्युक्तेः ॥ ३ ॥



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

विशेषांतरं सोदाहरणमाह सज्ञेरवाविति सूर्ययुक्त बुध धनस्थे सेवनपटुः चलस्वः चलधनः यद्भावनाथेन तादृशे सूर्ये आढ्ये शुक्रे तस्य पुरुषस्य भावनाथसदृशग्रहस्ते धनंस्यात् तस्यतदधीनं धनंज्ञयमित्यर्थः अनायासेन बोधायोदाहरणेनोक्तमर्थं विशदयति भवेदिति वृषलग्ने जातस्य सूर्यो बुधयुक्तो धनस्थानेस्ति बुधस्तु पंचमेशः स्त्रीग्रहश्चातस्तस्य नरस्य स्वकन्याहस्ते धनं तदधीनं तस्य धनंज्ञेयमिति ॥ ४ ॥ उदाहरणांतरं चेदिति भ्रातृपे स्त्रीखेचरे इत्यत्राप्यध्याहार्यं सुगममन्यत् ॥ ५ ॥ तत्रेति क्रूरयुक्ते शुक्रे

सज्ञेरवौसेवनकृच्चलस्वोयद्भावपाढ्येस्यकरस्थितस्वः ॥ भवेद्यथोदाहरणंसुतेशेस्त्रीखेचरेस्यास्तिसुताकरेस्वम् ॥
॥ ४ ॥ चेद्भ्रातृपेस्याद्भगिनीकरस्थं मातृष्वसामातुलपेतुवाच्या ॥ राहौधनेदन्तरुजाधनस्थेऽब्जेसन्निपातादिकशीतरोगी ॥ ५ ॥ तत्रस्थितेक्रूरयुतसितेस्यात्काणोथवाक्ष्णाविकृतः स्खलद्गीः ॥ धनव्ययस्थे भृगुजेथवारेकर्णव्यथाब्जेतुदृशोर्विकारः ॥ ६ ॥ जीवेकोशेसाधिकारेथवाज्ञेवाग्मीसस्यान्मानवः सौम्यवक्रः ॥ केतौदीर्घास्योथखेटःस्वगश्चेत्सारिस्तद्भेवास्यमृत्युर्मुखार्त्त्या ॥ ७ ॥

धनस्थे सति पुरुषः काणः स्यात् अथवाऽक्ष्णाविकृतः अक्ष्णेति विकारलक्षणेतृतीया । विकृतनेत्र इत्यर्थः ॥ ६ ॥ जीवे बुधे वा साधिकारे कोशे धनस्थेसति पुरुषोवाग्मी अधिकारस्तु स्वक्षेत्रोच्चस्थत्वादिरूपः पंडितसदसि शास्त्रार्थनिरूपणे कुशलो निपुणः स्यात् सौम्यवक्रः मिष्टवचनः केतौ धनस्थे दीर्घास्यः अथ यः कश्चिद्ग्रहः स्वगः धनस्थानगः सारिः शत्रुयुक्तः शत्रुराशिगश्चेत्स्यात्त

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

दा तस्य पुरुषस्य सुखार्त्या सुखदुःखेन मृत्युः स्यात् ॥ ७ ॥ विधाविति चंद्रे धनस्थेसतिसलिलाद्भीतिः तथा शनौ राहौच वनिताग्रहयुक्ते धनस्थे सति म्लेच्छादिभिर्निर्धनता पुरुषस्यवाच्या ॥ ८॥ यदास्वप इति स्पष्टार्थः श्लोकः ॥ ९ ॥ इति धनभावः ॥

विधौधनेभीः सलिलात्तथार्कौराहौधनेवावनिताग्रहाढ्ये ॥ म्लेच्छैर्निषादैर्गणिकाजनैर्वा गान्धर्वनाट्यादि भिरस्वतास्यात् ॥ ८ ॥ यदास्वपोवाधनगःकुजश्चेचेन्निर्बलोर्यग्निनृपैःस्वनाशः ॥ रक्तप्रकोपाद्विषशस्त्रघाता न्नरस्यमृत्युःक्षितिजेसपापे ॥ ९॥ इतिधनम् ॥ बाहुस्तृतीयंसहजाख्यमत्रत्वम्बापितृव्याम्बकमातुलादेः ॥ दास्यादिकानांश्रुतिविक्रमादेर्भ्रातुः फलंवाच्यमतःसुधीभिः ॥१ ॥ सत्सम्प्रयुक्तं सहजे शुभर्क्षेदृशासतांभ्रा तृसुखार्थसिद्ध्यै ॥ कुजेक्षितस्तत्रशनिःसहोत्थक्षयायशुक्रेज्यदृशाशुभंस्यात् ॥ २ ॥

अथतृतीयभावफलंविवक्षुस्तत्रापि विचारणीयस्थानपदार्थनामादीन्यतिदिशति बाहुरिति अंबापितृव्यस्य मातामहभ्रातुः अंबक मातुलादेः पित्रादिमातुलादेः अत्रेतिपदेनस्थानमुक्तम् अत इतिफलपदार्थान्वयि नातः पौनरुक्त्यम्॥ १॥सत्संप्रयुक्तमितिस्पष्टार्थः ॥२॥

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

स्वर्क्षेइति तृतीयेसशनौराहौसति दुर्नखत्वादिः ॥ ३ ॥ तत्रकुजार्कप्रयुक्तं विशेषमाह एवमिति कुजेऽर्केचतृतीयस्थे तदस्थिभंगः दक्षबाहस्थिभंगः दुष्करत्वं उग्रकर्मकारित्वं सौम्यग्रहे भ्रातृस्थेतुनविकृतिः नास्थिभंगादिः तत्रजन्मकाले तृतीयभावे यावंतोनवांशाः बलवद्भौमेंदुभ्यांदृष्टाउदिताः तत्समास्तत्संख्याकाः तत्सोदरावाच्याइति ॥ ४ ॥ तृतीयेभानुदृष्टेः फलविशेषमाह भानौभाग्ये इति भाग्यस्थेस्वर्क्षादिस्थत्वप्रयुक्तबलवति भानौ भ्रातृहानिः तृतीयस्यभानुना पूर्णदृष्टत्वात् बहूनां यदिकश्चिद्भ्राताजीवेत्तदा

स्वर्क्षेजीवेभ्रातृगेभ्रातृसौख्यंमन्दे भ्रातृस्थ तुभाग्याधिकःस्यात्॥बाहौराहौसार्कजेदुर्नखत्वंदक्षेहस्तेदारुघातो निलार्त्तिः ॥ ३ ॥ एवंकुजेर्केचतदस्थिभंगःस्याद्दुष्करत्वंविकृतिर्नसौम्ये ॥ भौमेन्दुदृष्टाः सहजेनवांशायाव न्मितास्तत्समसोदराःस्युः॥४॥ भानौभाग्येस्वर्क्षगेभ्रातृनाशश्चेज्जीवेदेकोनुजोराजतुल्यः ॥ दुष्टैर्दृष्टोऽब्जोऽखिलान्हन्तिबाहौजेष्ठानर्कोस्त्रोनुजाञ्छन्यगुस्तान् ॥ ५ ॥ भुजेकुजेक्रूरदृशायताङ्कितंक्षताच्चपित्तादनुजेग लेरुजा ॥ सशात्रवस्तत्रखलाभुजव्यथागरुन्मरुद्भूतपराबलाबलात् ॥ ६ ॥

नुजएवनज्येष्ठः तत्रापि तेनराज्ञेव भवितव्यम् एवं तृतीयेचंद्रःपापैःपूर्णदृष्टयादृष्टःसकलभ्रातृच्छेदयोगः सूर्यस्तत्रतादृशोज्येष्ठाने व हंति भौमस्त्वनुजान् शन्यगुः शनियुक्तोराहुस्तु तान् ज्येष्ठाननुजांश्चहंति ॥ ५ ॥ विशिष्टकुजेतत्रस्थेविशेषमाह भुजेइति क्रूरग्रह दृशाविशिष्टे कुजे भुजेसति क्षतात् शस्त्रादिघातात् आयताङ्कितम् आयतचिह्नंबाहौवाच्यमिति एवं पित्तात् कनिष्ठभ्रातृगलेरुजापि



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

तत्र तृतीये सशत्रवः पापाश्चेत् भुजव्यथा वाच्या तथा गरुन्मरुत् पक्षवातः पक्षाघातइत्यर्थः तथाऽबला तस्यस्त्री बलात् प्रसह्यद्यूत पराज्ञेया ॥ ६ ॥सहजहानियोगः द्यूनेइति अर्कजेशनौ सप्तमे अहौ राहौ नवमे अस्रेभौमे आयगेसति सहोदराणां हानिर्वाच्या एवं तृतीयेशनावपिपापदृष्टेइत्यध्याहार्यं बुधेज्यशुक्रास्तत्रभ्रातुः शुभाः तत्रदुष्टग्रहयोगेक्षणात् पुरुषाणांद्वयोर्ज्येष्ठानुजयोः क्षयइति ॥ ७ ॥

द्यूनेर्कजेहौनवमेस्रआयगेसहोत्थहानिःसहजेशनावपि॥बुधेज्यशुक्राः सहजेतुतत्सुखंद्वयोक्षयोदुष्टयुतीक्षणा
न्नृणाम् ॥७॥ चन्द्रेतुभाग्ये सहजेऽर्कजश्चेद्वागौशुभैर्दृष्टयुतेतृतीये ॥ तद्वद्विनश्येद्भगिनीत्रयंवैचिह्नंतुबाह्वोर
थवापिकुक्षौ ॥ ८ ॥ सोदरीराहुदृष्टेसितेभ्रातृगेदुर्विषात्स्याद्व्यसुस्तत्रचेन्मन्ददृक् ॥ सर्पभीरप्युदीर्याथकर्णे
खलैःकर्णमांद्यं परंषष्ठतुल्यंफलम् ॥ ९ ॥ इतितृतीयभावः ॥ सुखञ्चतुर्थेक्षितिवाहनादेर्वापीतडागप्र
हिभूरुहादेः॥ क्षेत्रेष्टमित्रालयबन्धुमातृवक्षःस्थलादेश्चफलंविचार्य्यम् ॥ १ ॥

चंद्रेत्विति नवमेचंद्रे शनिः सहजगश्चेत् यद्वाराहौ तृतीयगे शुभैर्दृष्टयुते तदाभगिनीत्रयनाशः बाह्वोः कुक्षौवाचिह्नमपि ॥ ८ ॥ सोदरीति राहुदृष्टेशुक्रेतृतीये दुर्विषाद्भगिनी व्यसुर्मृतावाच्या तत्रशनिदृष्टिश्चेत् सर्पभीरपिवाच्या खलैः कर्णेतृतीये कर्ण योर्मंदताशब्दग्रहणासामर्थ्यमिति ॥ ९ ॥ इतितृतीयभावः ॥ अथचतुर्थभावफलंविवक्षुस्तत्पदार्थानाह सुखमिति प्रहिः कूपः

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

पुंस्येवांधुःप्रहिरूप इत्यमरः स्पष्टमन्यत् ॥ १ ॥ दृष्टेइतिरविकुजयोरन्यतमस्यसुखस्थत्वेपित्तास्रपीडापार्श्वव्रणादितदुपल
क्षिताधोदेहपीडाचज्ञेया ॥ २ ॥ यमेति शनिराहुदृष्टेभौमेचतुर्थगे तत्रविधोरपि दृष्टिश्चेत्तदास्य शिशोर्माताव्यभिचारिणी
वाच्या चतुर्थे यादृशगुणदोषवान्ग्रहः स्यात्तदुक्तबंधुसुमित्रबांधवादिष्वपि प्रतिबंधकाभावेतद्गुणदोषसंभव इत्यर्थः ॥ ३ ॥

दृष्टेशुभैर्वासहितेसुखेसत्फलंसुखेशेसबलेसुखेपि ॥ रविःकुजोवासबलःसुखेचेत्पित्तास्रपार्श्वव्रणजातपीडा ॥२॥ यमागुदृष्टेचकुजेप्रसूगते विधोर्दृशास्यव्याभिचारिणीप्रसूः ॥ सुखेभवेद्यद्गुणदोषवान्ग्रहस्तदुक्तबन्धुष्वपितस्यसम्भवः ॥३॥ अम्भःप्रियंतत्रयदासितेन्दू मिष्टंबुधेमिष्टतरन्तुपूज्ये ॥ राहौशनौतीक्ष्णमरस्यमुक्तमर्केकुजेस्यादिहकष्टलभ्यम् ॥ ४॥ बुधेगृहंचित्रमजीर्णमिन्दौजीवेदृढंचादृढमर्ककेत्वोः ॥ रम्यंसितेजीर्णमिनात्मजाग्वोर्दग्धंकुजेस्थ्याद्यसुरार्किवीर्ये ॥ ५ ॥ तुर्येतुर्येशेथवाब्जेसिते च रूप्यंद्रव्यं स्वन्नमिष्टारसाः स्युः ॥ स्वर्णज्ञेर्केकांस्यमुक्तादिजीवेरत्नाढ्यंताम्रं कुजेशस्त्रमार्कौ ॥ ६ ॥

तत्र जलाशयजलादेर्मंदिरादेश्चेष्टानिष्टत्वादिजिज्ञासायामाह अंभःप्रियमितिस्पष्टार्थौ श्लोकौ ॥ ४ ॥ ५ तत्र गृहादावन्न
रसधात्वादिविशेषस्य मम मनसिकीदृशं वस्तु संप्रति कुत्रास्तीत्यादेश जिज्ञासायामाह तुर्ये इति स्पष्टम् ॥ ६ ॥

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

राहावित्यपि पूर्वान्वयि अत्रैवगतवस्त्वादिस्थानादिज्ञानायनिर्दिशति गतं वस्तु जीव इति जीवे सुखस्थे गतं वस्तु अभिल षितं वा प्रासादे वाच्यं भृग्वब्जयोः शुक्रचन्द्रयोस्तत्रस्थयोर्नीरभूमौ अनूपादौच भौमे तत्रस्थे अग्निस्थाने बुधेतत्रस्थे पक्वेष्टकाढय स्थाने मंदे तु भ्रष्टस्थाने अर्केपशुभूमिषु बाह्यस्थाने च राहावप्येवं लग्नादिस्थेष्वप्येतेषु चतुर्थदर्शित्वे सत्यपि तथाफलंज्ञेयम् ॥ ७ ॥ प्रश्नादावप्येतदेवं विमर्शनीयमित्याह प्रश्ने इति अन्यथा ग्रहाणां पूर्णवीर्यत्वाद्यभावे चतुर्थे बलवत्सद्ग्रहादेरभावे च सुखस्य

राहावस्थ्याद्यं गतंवस्तुजीवेप्रासादेभृग्वब्जयोर्नीरभूमौ ॥ भौमेग्निस्थानेबुधेत्विष्टकाढये मन्देभ्रष्टेर्केपशु क्ष्मासुबाह्ये ॥ ७ ॥ प्रश्नेजन्मन्यप्युदीर्यंफलंतत्प्रोक्तंपूर्णम्पूर्णवीर्य्यग्रहाणाम् ॥ सद्भिस्तुर्यस्थैः सुखंस्या त्स्वपित्रोःसाध्वीभक्तिः श्रीपतौनान्यथोक्तम् ॥८॥ खेकुजेवार्कजेकेंन्दुदृष्ट्याक्षयस्तातयोर्हृद्रुजास्वेष्टभीरस्व ता ॥ बन्धुगेस्तेग्नितापोऽनिलार्त्तिःशनौद्वित्रिसङ्ख्यप्रसूतिस्तुरीयेखले ॥ ९ ॥

पितृगुरुभक्तेः श्रीकृष्णप्रमुखेष्टदेवताभक्तेश्चाभावोवाच्यः ॥ ८ ॥ पुनस्तत्रैव द्वाभ्यांफलादिविशेषं निरूपयति खेकुजे इति खेदशमे कुजे सूर्यदृष्टे पितुर्हृद्रुजा हृदयामयेनक्षयोवाच्यः एवं शनौ दशमस्थे चन्द्रदृष्टे हृद्रुजा मातुःक्षयः यद्वा स्वस्यापि हृद्रुजा टाबंतरुजाशब्दस्य शिशुहृदयरोगोपस्थापकता तृतीयांतत्वे पित्रोस्तद्रोगप्रतीतिःस्वेष्टभीः स्वस्य इष्टेषु प्रियेषु धनबंध्वादिषुभीःअस्वता निर्धनता एवं बन्धुगे चतुर्थगे भौमे अग्नितापः शनौ तत्रस्थेऽनिलार्त्तिः तुरीये सामान्यतः खलेसति द्वित्रि

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

संख्यप्रसूतिः अल्पैवप्रसूतिरितिभावः ॥ ९ ॥ अथचतुर्थे एव सबांधवस्य शिशोरनिष्टयोगमाह तनुपे इति लग्नेशे चतुर्थे दशमेशाभ्यां सहितेव्ययषष्ठसप्तमान्यतमगे सति यद्वास्तगेसूर्योच्छिन्नद्युतिके सति अतएव शत्रुनीचगृहादिगे सति पितृप्रसूभ्यां तातजननीभ्यां सहितस्य निजस्य जातस्य शिशोः क्षयोवाच्यः पुनर्यदि तत्र बलवत्पापग्रहदृष्टिस्तदा शीघ्रमेव तस्य क्षयइत्ये वकारेण सूचितम् ॥ १० ॥ इति चतुर्थभावः ॥ पंचमभावफलं निरूपयितुं तावत्तन्नामानि तत्र द्रष्टव्यपदार्थांश्च निर्दिशति मति

तनुपेसतुरीयतातपेव्ययगेवारिपुगेस्तगेतथा ॥ विबलेसपितृप्रसूनिजक्षयएवात्रखलेक्षणान्नृणाम् ॥ १० ॥
॥ इतिचतुर्थभावः ॥ मतिप्रबन्धःसुतभेनिजोदरंविनेयगर्भस्थितिमन्त्रसाधनम् ॥ स्वपुत्रविद्यादिचदेवसेवनं विचार्यमेतत्सकलंविचक्षणैः ॥ १ ॥

प्रन्बध इति मतिकल्पितः प्रबन्धः यद्वा मतिविशिष्टः प्रबन्धः मतिश्च प्रबन्धश्चेत्यर्थः सुतभे पंचमे निजोदरं वक्षःस्थलापेक्षयोदरस्या धस्तनत्वेन तदग्रिमावयवत्वात् विनेयः शिष्यवर्गः गर्भस्थितिर्मंत्रसाधनंच एतेषां समाहारः स्वपुत्राश्च विद्यादिचेति आदिपदात् बु द्धिसहायसंस्कारादिकमपि देवसेवनं देवताराधनम् इष्टदेवतायुक्तायुक्तसेवनंच वा विचक्षणैरूहापोहकुशलैरत्रसर्वं विचार्य निर्देष्टव्य



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

मित्यर्थः॥ १॥साधारणं फलं सद्बले इति पंचमेशे सद्बले उत्तमबलयुक्ते शुभस्थानगे शुभमेव सर्वम् अन्यथा विपरीतं तत्र रवौ साधिकारे दुर्बलेसतिपुरुषःकोपवान् अनलस्याग्न्यादेर्वैरिणश्च भीर्भयं पदे जान्वधोदेशे क्रोष्टुना जंबुकेन वाजिनाच प्रयुक्ता विविधारुजाच उदरे अवयवे पंचमेवा॥२॥ कुजेतादृशे तत्रस्थे सतिवह्न्यादिप्रयुक्ता पीडामृतापत्यत्वादिकंच एवं तत्रार्कौ शनौ राहौ चंद्रेवा तथाविधेवा

सद्बलेसुतभपेऽखिलंशुभंदुर्बलेबहुविधंविनिन्दितम्॥ कोपवाननलवैरिभीःपदेक्रोष्टुवाजिविरुजोदरेरवौ ॥ २ ॥
वह्निशस्त्रविषपीडनंकुजेदुःखितश्चपुरुषोमृतप्रजः ॥ वातगुल्मगुरुताकृमिव्यथार्कौतमस्यपिविधौनिजोदरे
॥ ३ ॥ मतिःस्थिरार्केचपलाविधौमताखलाकुजेज्ञेतुसमाशुभागुरौ ॥ सितेसुमृद्वीकठिनागुमन्दयोःशुभैः
सुधीःकोविदनिन्दकःखलैः ॥ ४ । कन्यापत्योब्जेसुतेदुर्बलेज्ञजीवेसत्पुत्रोऽतिदक्षःसितेच ॥ शन्यंशायाव
त्खलैस्तत्रदृष्टास्तावद्गर्भप्रक्षयोनेष्टदृष्ट्या ॥ ५ ॥

तादिव्यथापिवाच्या॥ ३ ॥ अथ स्वभावप्रयुक्तं प्रत्येकं ग्रहाणां फलमाह मतिरिति तत्रशुभैः सुधीर्भवति खलैः कोविदानांसतां निंदकश्चेति ॥ ४ ॥ कन्यापत्यइति अब्जे चंद्रे दुर्बले तत्रस्थे कन्यैवापत्यं यस्यतादृशः पुत्रापत्यहीनः एवं बुधेपि तादृशे तदेव फलं गर्भक्षययोगमाह शन्यंशा इति पंचमेवर्तमानाः शनिनवांशायावद्भिः खलैर्दृष्टाः तावतामेव गर्भाणां प्रक्षयोवाच्यः अस्यापवादःनेति

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

सं०नि० बलवतामिष्टानां शुभानां तत्र दृष्टिसत्त्वे गर्भक्षयोनेत्यर्थः ॥ ५ ॥ अपत्यराहित्ययोगमाह सुखेइति । चतुर्थे सपापे शुक्रेऽस्तसंस्थे सटी०
॥४५॥ सप्तमस्थे विधौ दशमस्थेचसति अत्रयोगे जातः संतानरहितोज्ञेयः मृतापत्यत्वयोगः शुक्रेसार्के पंचमस्थेसति मृतापत्यः अपि सं० ४
शब्दात्स्त्रीद्वयादावपि तथा खलैराढ्ये दृष्टेवा पंचमेपापराशावनपत्य एवेति ॥ ६ ॥ कन्यापुत्रयोगमाह सुतभेइति पंचमे समवर्गे
गृहहोराद्रेष्काणनवांशादिरूपे समेसति आर्किबुधाभ्यांयुते इंद्रास्फुजिद्भ्यांचंद्रशुक्राभ्यां दृष्टेचसति सुताज्ञेया पंचमेविषमव

सुखे सपापे च सितेऽस्तसंस्थे खस्थे विधौ सन्ततिवर्जितःस्यात्॥मृतप्रजःसार्कसितेसुतेऽपि खलाढ्यदृष्टेख
लभेऽनपत्यः ॥ ६ ॥ सुतभेसमवर्गआर्किविद्युतइन्द्रास्फुजिदीक्षितेसुता ॥ विषमेविधुशुक्रवर्गगे तनयोपी
क्षणतोन्यथात्मजा ॥ ७ ॥ सखलेऽर्कसुतेऽनपत्यताऽसृजिगर्भच्युतिरस्त्यपत्यहा ॥ रविरात्मजगोबलो
ज्झितःशिखिराहूयदिकुत्सितःसुतः ॥ ८ ॥ शुभदृष्टयुते शुभांशभे शुभसन्तानयुतःसुतस्थले ॥ शनिभां
शइहाब्जदृग्युते समपार्कावपि दत्तपुत्रवान् ॥ ९ ॥

र्गगे अथवाविधुशुक्रवर्गगे वा तदीक्षणतो वा पुत्रोपिवाच्यः अन्यथा शनिबुधादिदृष्टेस्वामिदृष्ट्यभावेच आत्मजा कन्याज्ञेये
ति ॥ ७ ॥ संततिसुखाभावयोगः सखले इति सपापे तत्र शनावनपत्यता भौमे तथाविधे गर्भक्षयः पंचमे निर्बलोरविः पापदृष्टो ॥४५॥
पत्यहा शिखिराहू तथाविधौ तत्रचेत्कुत्सित एव पुत्र इति ॥ ८ ॥ शुभदृष्टेति स्पष्टं दत्तपुत्रत्वयोगः शनिभांशइति तत्र चंद्रेण

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

दृष्टे युतेच शनिराश्यंशादौ चंद्रराशीशांन्यतमयुते शनौवा सति पुरुषोदत्तपुत्रेण पुत्रवान् दत्तःपुत्रो यस्मै इतिविग्रहात् ॥ ९ ॥ मूल्येन गृहीबपुत्रत्वयोगमाह मंदे इति चंद्रबुधयुक्ते शनौ तत्रस्थेऽन्यस्मै मूल्यं दत्त्वाक्रीतपुत्रेणसपुत्रव्यवहारवान् परवीर्यात्स्व क्षेत्रे पुत्रोत्पत्तियोगमाह ज्ञेनेति बुधदृष्टेशनौ बुधस्य गृहस्थे वाऽर्कभौमाभ्यां दृष्टेऽर्कभौमभांशेचवा नीचग्रहयुक्ते तस्मिन्नेवपंचमेशेचवा सति अन्यस्य वीर्यात्पुत्रोत्पत्तिस्तस्य क्षेत्रे वाच्या ॥ १० ॥ संततिविशेषस्पष्टयंस्तदाकारसंख्याज्ञा

मन्देसुतस्थेशशिसौम्ययुक्तेक्रीतः सुतःस्यान्मनुजस्यनूनम्॥ज्ञेनेक्षितेवाज्ञगृहेर्कभौमदृष्टेपिभांशेन्यसुतः स नीचे ॥ १० ॥ सुतदर्शकपुंग्रहैः सुतोवनितान्यैरथयेत्रगोलवाः ॥ शुभदृग्यदितत्रदृग्घतास्सदसत्तन्मित सन्ततिर्मता ॥ ११ ॥यत्संख्यैभेपुत्रपेतावतीस्यात्संख्यायावद्भिःखलैर्दृश्यतेसौ ॥ तावत्संख्यानाशमाया न्तिगर्भावापुत्रस्थानांकसंख्याः सुताःस्युः ॥ १२ ॥

नायाह सुतेति अपत्ययोगेसति पंचमस्थानदृष्टारः पुरुषग्रहाश्चेत्पुरुषावाच्याः तद्द्रष्टारः स्त्रीग्रहाश्चेत्कन्याः तत्संख्यामाह अथयेइति यत्काले पंचमेनवांशाः स्युस्तत्रयदिशुभग्रहाणां दृष्टिस्तया कलात्मकदृष्ट्यागोमूत्रिकया नवांशागुणनीयाः यातत्रोपर्य्युपरि अंशस्थाने संख्या सपन्ना तन्मिता सती असतीवासंततिर्वाच्या यदिपंचमदर्शकाः संतोग्रहास्तदासती असंतश्चेदसतीत्यर्थः ॥ ११ ॥ प्रकारांतरेण संख्यागभादौविशेषंचाह यत्संख्येइति पुत्रेशेमषादिक्रमेण एकद्व्यादिसंख्याके

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

सं॰नि॰ भेराशौस्थितेसति संततेरपितावत्येवसंख्याबोध्या पुनर्यावद्भिः खलैः शत्रुभिर्वाऽसौपुत्रेशोदृश्यते तावत्संख्यागर्भा नाशं यांति पुनः सटी॰
॥४६॥ प्रकारांतरेण संख्या वापुत्रेति पुत्रस्थानेयोराशिस्तस्ययोंकस्तत्समसंख्याकाः पुत्रावापुत्र्योवा पूर्ववत्ज्ञेयाः सुताश्चसुताश्चसुताइत्येक सं॰ ४
शेषइति॥ १२॥संततितनौरोगविशेषयोगः यद्धातुरिति पंचमे बलिष्ठसौम्यग्रहासत्त्वे आत्मजखगः पंचमेशः पंचमस्थो वाखलदृष्टयुतः
खलोविबलश्चयद्धातुः स्यात् सुततनौतद्धातुप्रयुक्तारुजानिर्देश्या ग्रहाणांधातवस्तुग्रहस्वरूपं वदताचार्येण मधुपिंगलदृगित्यादिनोक्ताः

यद्धातुरात्मजखगोत्र विनाबलिष्ठसौम्यग्रहं सुततनौ तु रुजा तदीया ॥ एकः सुतोत्रदिनकृद्यदिवात्रयस्ते
द्वेब्जेसुते सुतगते यदि वा चतस्रः ॥१३॥ तिस्रः कन्याः स्युः कुजेज्ञेचतस्रःपुत्राःपंचेज्येबलिष्ठेथशुक्रे॥क
न्याःषट्स्युर्वा चतस्रः शनौतुद्वेकन्ये पुत्रैक्यमीक्षावशाच्च ॥ १४ ॥

तथाहिपैत्तिप्रकृतिर्बहुवातकफः पित्तकः पित्तमारुतकफप्रकृतिःकफात्माकफानिलात्मा वातात्माचेति सूर्यादयः क्रमात् तथास्नाय्वस्थ्य
सृक्त्वगथशुक्रवसेचमज्जामंदार्कचंद्रबुधशुक्रेज्यभौमाइत्यपि पुनः प्रकारांतरेण संख्या एकइति यदिपंचमे दिनकृद्बलिष्ठस्तदैकः
पुत्रस्त्रयोवा पुरुषग्रहपंचमेशमित्रदृष्टेरवौसतित्रयः पुत्राः अन्यथैकः एवं अब्जे चंद्रेतत्रतथाविधेद्वेकन्ये स्त्रीग्रहदृष्टे चतस्रः कन्याइ ॥४६॥
ति ॥ १३ ॥ पुनःप्रत्येकग्रहवशात्संख्यामाह तिस्रइति ईक्षावशात् शत्रुमित्रपुंस्त्रीग्रहादिदृष्टिवशात्तत्तत्संख्याज्ञेया शेषस्पष्टम ॥१४॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

प्रथमं कन्या वा पुत्रोवोत्पत्स्यते इतिजिज्ञासायामाह लाभे इति लाभे खले पापेसति चंद्रशुक्रौ पंचमे चेत्तदा प्रथमम् आद्यगर्भेकन्यो द्भवः मातुश्चसुखाभावः पुत्रेपंचमे बलिष्ठे स्वगृहादिगे सौम्यग्रहेसति प्रथमं पुत्रएवेति अत्रबलवत्पदेनैव स्वगृहादिस्थत्वादिलाभेपुन स्तदुपादानेन मित्रोच्चादियोगमित्रदृष्ट्यादिप्रयुक्तं बलंपंचमेशस्यसौम्यत्वंच ग्राह्यमितिसूचितं स्थानबलंतु स्वपदोपस्थापितमे वेति गर्भसमयज्ञानायस्थूलोपायांतरं गर्भइति संभवेप्रतिबन्धकराहित्ये चसतिजन्मकुंडल्यांयत्रभावे गुरुस्तस्मात्स्थानाद्विषमभा वपर्यंतं जन्मलग्नमारभ्य तत्पर्यंतं वर्षाणि प्रसंख्यायसम्पन्नाङ्कसंख्याके वर्षेगर्भो वाच्यः तत्रापि सदसद्योगादौगर्भस्यक्षेमाक्षेमादिकम

लाभे खले सुतगतौ यदिचंद्रशुक्रौ कन्योद्भवः प्रथममत्रसुखं न मातुः॥ पुत्रेसुतोबलवतिस्वगृहादिगेहिग र्भोगुरोस्तुविषमेसतिसंभवेब्दे ॥ १५ ॥ ॥ इतिपञ्चमः ॥ ॥ षष्ठंनाभिःक्रोडमुक्तं नराणां तुर्याघ्रीणां क्रूरकर्मामयादेः ॥ संग्रामाणां मातुलानामरीणां चिन्ताशंकादेःफलं तत्र वाच्यम् ॥ १ ॥

पिबोध्यमितिसारम् । यद्वावेलाभसप्तांकतृतीये पंचमेगुरौ तदब्देगर्भयोगः स्यान्नान्यवर्षे कदाचनेत्यपिकश्चित् ॥ १५ ॥ अथ षष्ठभाव फलंविवक्षुस्तत्पर्यायांस्तदुपयोगिपदार्थांश्चनिर्दिशति षष्ठमिति देहावयवेषुषष्ठं नाभिस्थानं क्रोडस्थानंच तच्च ननाक्रोडंभुजा तरमितिकोशाद्भुजांतरं हृदयावच्छिन्नोदेशः पेटइतिभाषायां प्रसिद्धं तुर्याघ्रयः पशवः तदादीनामपीदमेवस्थानम् अस्मा देवतेषामपिशुभाशुभनिर्देशः कार्यः चिंताशंकादेः चिंतायाः मनसाचिंतितपदार्थयोगक्षेमादेः शंकादेर्व्याध्याध्यादेर्वैरो

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

सं०नि० ध्युपद्रवादिप्रयुक्तभयादेश्च फलम् उत्तरकाले सुखदुःखादिभोगइति कुकर्माण्यरयो मातुलादयश्चात्रैवविचार्याः ॥ १ ॥ षष्ठे सटी०
॥ ४७॥ शइतिस्पष्टम् ॥ २ ॥ तुर्यांघ्रीणामित्यत्रसूचितंविशेषंदर्शयति सबलैरिति रविभौमयोरिति सबलयोस्तत्रस्थयोस्तयोः करभाजादि सं० ४
उष्ट्राजादिपशुधनं पशुभीश्चवाच्या परेषु शनिराहुकेतुषुतत्रस्थितेषु लुलायधनं महिषादिधनं लुलायोमहिषोवाहद्विषत्कासरसैरिभा

षष्ठेशेसद्वीर्यगे सौम्यभेस्मिन् सौम्यैर्दृष्टे सौम्ययुक्ते शुभं स्यात् ॥ क्रूरैर्युक्ते क्रूरदृष्टेखलर्क्षेतत्प्रोक्तेषुप्रोक्तमि
ष्टंनर्धीरैः ॥ २ ॥ सबलैःशुभैर्यदियुतं रिपुभंवहगोधनं भवति तस्य गृहे ॥ रविभौमयोस्तुकरभाजसुखं पशु
भीःपरेषुतुलुलायधनम् ॥३॥ राहुःशनिर्वारिगृहस्थितश्चेत्स्यान्मातुलानामनपत्यतात्र॥काष्ठाश्मवातैश्चचतु
ष्पदेनतरुप्रपातेनजलेनमृत्युः ॥४ ॥ रव्याराभ्यांखलखगदृशाषष्ठभेशास्त्रवह्निक्लेशः स्याद्वाजननिसहजांगेपि
भीतिर्विषादेः॥ पुंभिः खेटैःसुतइहसुतास्त्रीग्रहैर्मातुलस्य सौम्याः षष्ठेनसहजसुखं विक्रमे चेत्खलाःस्युः॥५॥

इत्यमरः पशुभयमत्रापिबोध्यम् ॥ ३ ॥ निर्दिष्टक्रमेणमातुलादीनपिविचारयति राहुरिति अरिगृहेषष्ठेस्थितोराहुः शनिर्वायदिस्यात्
तदातन्मातुलानामनपत्यतावाच्या तस्यमरणकालेतत्प्रयोजकविशेषमाह काष्ठेति अत्र मातुलानामेवकाष्ठादिभिर्मृत्युरितिनियाम ॥४७॥
काभावादविशेषात्स्वस्याप्येवंमृत्युरितिबोध्यम् ॥ ४ ॥ मातुलानांक्लेशयोगांतरंतत्रैवचविशेषंप्रसंगाज्जातसोदरविचारमपिकरोति रव्या

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

राभ्यामिति षष्ठभेखलग्रहक्रूरदृष्टचाद्दृष्टाभ्यांरविभौमाभ्यांमातुलशरीरेशस्त्रेवह्नयादिप्रयुक्तः क्लेशोवाच्यः वाथवा विषादेर्भीतिर्वाच्या जननिइतिह्रस्वत्वं छन्दोभंगभयादपि जननिसुतयोरित्याचार्यप्रयोगदर्शनाच्च इह षष्ठे पुंभिःखेटैः पुरुषग्रहैर्बलवद्भिः सद्भिः कृतयो गदर्शनाद्दौमातुलस्यपुत्राज्ञेयाः स्त्रीग्रहैः सुतः पुत्र्यश्च स्वसोदरेषुविशेषमाह सौम्याइति यदिशुभग्रहाः षष्ठेस्युस्तदास्वस्यसो दरभ्रातृसुखमल्पंज्ञेयम् अत्र सहकारिणोनिर्दिशति विक्रमेइति यदिजन्मलग्नाद्विक्रमे तृतीये खलाः स्युस्तदासोदरसुखाल्पता नान्यथे

स्त्रीग्रहैः स्याद्भगिन्याः सुखं पुंग्रहैः सोदराणां तथाषष्ठपो वारिभम्॥यादृशंतादृशाः स्युर्नृणांशत्रवोगौशनौ वात्रकट्यांचलक्ष्मासितम् ॥ ६ ॥ वास्यस्त्रियाश्चिह्नमिदंतथार्कोसृग्वात्रचेत्तस्यभवेद्व्रणाद्यम् ॥ वा तत्स्त्रिया दक्षपदे गले चजंघाप्रदेशेपितथांकनंस्यात् ॥ ७ ॥

ति ॥ ५ ॥ षष्ठादेवसोदरसोदरीसुखमपिविचार्यमाह स्त्रीग्रहैरिति शत्रूणामप्यत्रविचारंकरोति षष्ठपइति षष्ठेशःषष्ठस्थानंचयादृशं तादृशास्तत्स्वभावाकारजात्यादिविशिष्टास्तस्यशत्रवोवाच्याः क्रूरकर्मामयादेरित्यत्रादिपदग्राह्यचिह्नादीन्यप्यत्रजानीयादित्याहअगा विति राहौशनौत्रासमर्थेकलामसितं कृष्णंचिह्नंज्ञेयं चिह्नंलक्ष्मचलक्षणमितिकोशात् ॥ ६ ॥ पुरुषस्योक्तचिह्नाभावेतस्यस्त्रिया वाच्यमित्याह वास्येति तथा अर्कोभौमोवाषष्ठेचेत् व्रणाद्यंपूर्ववत् तथातत्स्त्रियादक्षपादेगलेजंघादौचांकनमपिस्यात् ॥ ७ ॥

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

पापग्रहेषुपुनर्विशेषमाह भानुरिति बलीभानुः षष्ठेचेत्कटयांशूलकृत् वैरिहंताच सभौमेराहौषष्ठेचेत् मातृपक्षात्भीर्वाच्या तथा गुरुयुक्तदृष्टेभानौभौमेप्यत्रस्थेर्द्धांगपीडा पुनः शृंगिभिः काष्ठतोवाकटयांकष्टंचवाच्यं काष्ठतइतितृतीयार्थेतसिल् काष्ठैरित्यर्थः ॥ ८ ॥ मातुलमातृष्वसृसंख्यासुखादियोगमाह षष्ठे इति षष्ठे चंद्रेद्वितीये जीवे मातुलद्वयं तत्रसैंदौ भौमे सरोगमातुलैक्यं शुक्रे षष्ठे

भानुःकटयांशूलकृद्वैरिहन्ताभौमेषष्ठेगौचभीर्मातृपक्षात् ॥ भानौजीवाद्ययेक्षितेर्द्धांगपीडाकष्टंकटयांशृंगिभीः काष्ठतोवा ॥ ८ ॥ षष्ठेब्जेचेज्येधनेमातुलौद्वौषष्ठेसैंद्वारेसरुङ्मातुलैक्यम् ॥ षष्ठेशुक्रेतस्यमातृष्वसैकातिस्रोद्वेवातत्सुखंस्यान्नराणाम् ॥ ९ ॥ इतिषष्ठभावः ॥६॥ स्यात्सप्तमंवस्तिरिहांगनादेर्वादप्रपायानवणिक्रियादेः ॥ अन्योन्यमिष्टार्थफलं नृनार्योः पितामहादेश्च फलंविचार्यम् ॥ १ ॥

मातृष्वसैका सबलेतु द्वेवातिस्रो वा ताः सुखदाश्चज्ञेया इत्यर्थः ॥९॥ इतिषष्ठभावः ॥ ६ ॥ अथ सप्तमभावफलं निरूपयिष्यंस्तत्पर्यायान् विचार्य स्थानादिपदार्थांश्चदर्शयति स्यादिति सप्तमं वस्तिस्थानं वस्तिर्नाभेर्द्वयोरधइति इह सप्तमे अंगनादेर्वादादेः पिता महादेश्चफलं विचार्यमित्यन्वयः एवं नृनार्योदंपत्योरन्योन्यमिष्टार्थफलंमानुकूल्यसुखादिकमपि विचार्यमित्यर्थः ॥ १ ॥



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

सामान्यतः फलंस्फुटयन् योषितांवर्णविशेषजिज्ञासायामाह शुभे शुभमिति स्पष्टम् ॥ २ ॥ वनिताया आकारविशेषान् गुणादींश्चकीर्तयति सूर्येइति बलान्विते पापारिदृष्टेच सूर्ये सप्तमस्थे सति तस्यजाया कालजीर्णा पुरुषेणाभुज्यमानाकालेन जीर्णा यौवनमतिक्रम्य वृद्धत्वंगता ज्ञविध्वोर्बलवतोः सप्तमस्थयोर्बाला पुरुषसंगसुखाद्यनभिज्ञा रजोधर्मरहिता भावियुवरमणयोग्या शुक्रे यौवनाढ्या

शुभेशुभंस्यादशुभेनशोभनं गुरौसितेब्जेचबलान्वितेंगना ॥ सुवर्णवर्णाविदिनीलभाकुजेसुशोणभा श्यामतराशनावगौ ॥ २ ॥ सूर्येज्ञेयाकालजीर्णाज्ञविध्वोर्बालाशुक्रेयौवनाढ्याकुजेपि ॥ पूज्येरम्यासूनुसूः सद्गुणास्याद्वृद्धैवस्यादर्कजेगौचजाया ॥ ३ ॥ क्लीबाराहौवाशनौस्त्रीस्वभावाशुक्रेब्जेचान्येषुसापुंस्वभावा॥ सौम्यैर्युक्तंसौम्यभंसौम्यदृष्टंश्वश्रूपक्षात्स्यात्सुखंचान्यथान्यत् ॥ ४ ॥

कुजेपि तथैव बलिष्ठे अपिशब्दात् क्रूरा कुटिलानातिसुंदरीच पूज्ये गुरौ सूनुसूः पुत्राणां जननी सद्गुणाच शनौ राहौचवृद्धाभार्या ज्ञेया ॥ ३ ॥ स्त्रियाः स्वभावविशेषं श्वश्रूपक्षात्सुखादियोगंचाह क्लिबेति राहौ शनौ च तत्रस्थे क्लीबा वंध्याफलपुष्पादिरहिता शुक्रे चन्द्रेच स्त्रीस्वभावा जाडयाद्युपेताचलचित्ताच अन्येषु रविकुजबुधगुरुषु पुंस्वभावा श्वश्रूपक्षादित्यत्र स्त्रीपुरुषयोरुभयोरेव



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

स्त्री जन्मलग्नात्सप्तमे सौम्ययोगे स्त्रियाः पुरुषलग्नात्सप्तमे सौम्ये पुरुषस्यश्वश्रूपक्षात्सुखं वाच्यं नान्यथेत्यर्थः ॥ ४ ॥ वनिता बहुत्वे कलत्रयोगौ तस्या अभिमानयोगद्वयंचाह वर्गेइति सप्तमे सितवर्गे सितदृष्टेचबह्व्यः पत्न्यः पुरुषस्य सुखाय स्युः गुरुवर्गे तत्र गुरुदृष्टे चैकैव सुखाय तथा शुक्रे नीचेपियत्रकुत्रस्थे सप्तमे शुक्रारांभ्यां दृष्टेचेत्येको गर्वयोगः एवं विधुजीवशुक्रराशौ सप्तमस्थे शुक्रारदृष्टिसहितेचेति द्वितीयो वनितागर्वयोगइति ॥ ५ ॥ द्यूनेइति सप्तमेयमे शनौ असृजि भौमेच यद्वा शनौ भौमदृष्टे भौमे शनिदृष्टे

वर्गेसितस्यसितदृग्यदि तत्रपत्न्योबह्व्यःसुखायगुरुभेतुमतैकपत्नी ॥ नीचेसितेपिविधुपूज्यसितर्क्षकेत्र शुक्रारदृष्टिसहितेवनितासगर्वा ॥ ५ ॥ द्यूनेयमेमृजितदीक्षणतश्चवातार्त्ताचंचलासुरुधिराकटिचिह्नयुक्ता ॥ साब्जेकुजेमृतिमुपैत्युदरामयेनाक्यांग्वोर्जलक्रिमिरुजापशुडाकिनीभिः ॥ ६ ॥ द्यूनेशुभैः सुमदनोथखरस्मरोन्यैः क्लीबैर्नपुंस्त्वमगुनातुनदारयोगः ॥ चेत्स्यान्म्रियेतशुभदृष्टयुतेविलम्बाद्रन्ध्रे कंजेऽसृजिमदेवनिताद्वयंस्यात् ॥ ७ ॥

वा उभयसत्त्वे वा उभयदृष्टे वा जाया वातार्त्ता चंचला च सरुधिरा रुधिरविकारयुता कटिचिह्नचिह्निताचज्ञेया योगांतरं साब्जेइति सचंद्रे कुजे शनिदृष्टे इत्यपि योज्यं तस्या उदरविकारेण मरणं अर्क्यग्वोः शनिराह्वोस्तत्रस्थत्त्वे जलक्रमिरोगादिना तस्या मृत्युः पशुडाकिन्यादिभिश्चेत्यर्थः ॥ ६ ॥ पुनर्योगांतरमाह द्यूनेशुभैरिति शुभैः सप्तमेतुपुरुषः सुमदनः शास्त्राविरुद्धकामवान् धर्मा



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

विरुद्धोभूतेषुकामोस्मिभरतर्षभेति तादृशमदनस्येश्वरानन्यत्वात् अन्यैः पापैः खरस्मरः उत्पथगामी अगम्यागमनादिकृत् क्लीबैर्बु
धादिभिर्निर्बलैश्चनपुंसकता राहुणाशुभाद्यदृष्टेनतुनदारसुखयोगः स्त्रीद्वययोगः रंध्रेइति स्पष्टम् ॥ ७ ॥ स्त्रीरमणादौविशेषणमाह चंद्र
दृगिति चंद्रेदृष्टेमदेचंचलाऽबला अत्र दृष्टिः पूर्णदृष्टिर्बलवत्त्वंच एवं बुधयुक्तदृष्टेचंद्रेपि परंतु जीववर्गे इतियोगद्वयान्वयि मदेचंद्रेचजीव
वर्गस्थेसत्येवेत्यर्थः शनिभौमयोर्वर्गयोः सप्तमेचंद्रेचसत्त्वे तथातयोस्तत्रदृष्टिसत्त्वेचदंपत्योरुभयोश्चांचल्यंव्यभिचारनिरतत्वम्अयमर्थः
यदिशनिभौमयोर्मध्येऽन्यतरस्ययस्यसप्तमेगृहादिवर्गषट्कं तस्यैवतत्रदृष्टिरपिचेत्तदायंयोगोनान्यथेति यदिशुक्रोपितदन्यतमसंबंधवा

चन्द्रदृक्चेन्मदेचञ्चलाचाबलाजीववर्गेद्वयुग्दृष्टइन्दौतथा ॥ आर्क्यसृग्वर्गयोस्तत्रतद्दृग्यदादम्पतीचञ्चलौ
चेत्सितोन्यारतः ॥ ८ ॥ मन्देन्द्वारायुक्तदृष्टाविधुर्वामध्येऽसृक्शन्योस्तयोःपुंश्चलत्वम् ॥ सौम्यांशेवाद्यूनपे
सौम्यदृष्टे वेश्याकाराकामिनीस्यान्नरस्य ॥ ९ ॥

न् तदान्यासुरतः स्वस्त्रियं विहायैवान्यास्वासक्तः स्यादित्यर्थः अत्र शनिचन्द्रावपिसप्तमेयोगादिकारकौचेत्तदापुरुषस्यव्यभिचारित्वं
स्त्रीबहुत्वं वा स्त्रियाः सप्तमे तौचेत् तदातस्याबहुपुरुषगामित्ववंध्यात्वंचेतिज्ञेयम् ॥ ८॥ पुंश्चलत्वयोगमाह मंदेंद्वाराइति शनिचंद्रभौमाः
परस्परं युक्तादृष्टावा अथवा भौमशन्योर्मध्येचंद्रः स्यात्तदातयोः पुंश्चलत्वं दंपत्योर्मध्येयस्यायंयोगः स्त्रियाश्चेत्तस्त्री पुंश्चली पत्युश्चे
त्सपुंश्चलः पुंश्चलत्वंनाम गुदमैथुनप्रियत्वं आधारत्वेनकर्तृत्वेनवा एतच्चलग्नेशसप्तमेशयोर्नीचस्थत्वेपि योगांतरमाह सौम्येति सप्तमेशे

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

बुधनवांशस्थेबुधेनैवदृष्टेसतितस्य स्त्रीवेश्याकरास्यादित्यर्थः ॥ ९ ॥ पुनर्विवाहभावयोगं स्त्रियांविशेषंचाह लग्नेति लग्नसप्तमव्यय गाः पापाश्चंद्रश्चक्षीणः खलराशिगोवापंचमेस्यात् तदाविवाहाभावयोगः षष्ठेव्ययेलग्नेवाचेत्बुधार्कौ तदैका स्त्री वाच्या यदा नवमपंचम सप्तमान्यतमगौ सितारौ शुक्रभौमौ स्यातां तदाएकापिस्त्री विकला अंगहीनाबुद्धिकलाहीनाच ॥ १० ॥ अथवंध्यापुनर्भूयोगादीनाह गंडांतर्क्षे इति शुक्रेगंडांतर्क्षे कर्कालयंडजभांततोर्द्धघटिकं सिंहाश्विमेषादिगं गंडांतमित्युक्तेगंडांतराशौस्थिते अथवा सप्तमगेशुक्रे

लग्नस्मरव्ययगताअशुभाःसुतेब्जेक्षीणेथवाखलभगेचनतद्विवाहः ॥ षष्ठेव्ययेवपुषिवाज्ञरवीतदैककोणद्युनेच विकलैवयदासितारौ ॥१०॥ गण्डान्तर्क्षेद्यूनगेवासितेंगेमन्दे बन्ध्येशः सुतर्क्षेनसच्चेत् ॥ पापाःकामेब्जात्त नोर्वावसन्तोमन्देन्द्वोर्द्यूनेपुनर्भूपतिःस्यात् ॥ ११ ॥ भार्याःस्युर्द्यूनेशनन्दांशसंख्याःखेटेक्षातुल्याश्चगोंशेज्ञ शन्योः ॥ वाराक्यौरेकैकिकाथारिगेस्रेमृत्यौमन्दगामदेस्त्रीनतिष्ठेत् ॥ १२ ॥

अंगे लग्नेशनीचसति पुरुषोवंध्यापतिः परंतु पंचमेपापराशियोगदृष्ट्यादिसत्त्वे एवं वंध्यायोगः तथा चंद्राल्लग्नाद्वासप्तमेपापाःसर्वत्रनशु भाः तथा मंदचंद्रयोर्जन्मतनोर्द्यूनेसतोस्तस्य स्त्रीपुनर्भूर्वाच्या पुनर्भूस्तुप्रथमवृतवरमरणेजातेयदर्थंवरांतरवरणं क्रियते साभवति॥ ११॥ भार्यासंख्यायोगानाह भार्याः स्युरिति द्यूनेशोराशेर्यावन्मितनवांशेवर्त्ततेतावन्मितास्तत्संख्याकाभार्याः उच्चपरोच्चादौद्विगुणाद्याः प्रकारांतरं खेटेक्षातुल्याः भार्याकारकग्रहाणांयावतीयावतांवादृष्टिस्तत्तुल्याअपि अथैकभार्यायोगः गोंशइति ज्ञशन्योर्नवांशे अथवा

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

भौमशन्योर्नवांशेमदेतदीशेवास्थिते एकेकिका एकैकास्त्रीस्यादित्यर्थः अथ स्त्रीस्थित्यभावयोगः अरिगे षष्ठेभौमे अष्टमेशनौ राहौ सप्तमेसति स्त्री न तिष्ठेत् विवाहबहुत्वेपिस्त्रीसुखाभावइति ॥ १२ ॥ अथश्वसर्पादिविषधरदंशयोगमुपदंशादिरोगयोगंचाह यदेति सप्तमेअष्टमेवाभौमराहुशनिभिर्युक्तेपूर्णदृष्टयाद्दृष्टेवापुरुषः श्वादिभिर्दष्टोवाच्यः यद्वाकुरुजाउपदंशादिदुष्टरोगेणदष्टः स्यादिति ॥ १३ ॥ इतिसप्तमव्याख्या ॥ ७ ॥ अथाष्टमभावफलंविवक्षुस्तत्रविचार्यपदार्थान्निर्दिशति गुह्यस्थान इति अष्टमंगुह्यस्थानमुच्यतेव्याध्युत्प

यदामदेष्टमेवादिभौमाग्वार्कियुतेक्षिते ॥ तदाश्वभिर्वासर्पाद्यैर्दष्टोवाकुरुजाध्रुवम् ॥ १३ ॥ इतिसप्तमभावः ॥ ७ ॥ ॥ गुह्यस्थानेत्राष्टमेशत्रुभीतिर्व्याध्युत्पत्तिच्छिद्रनौबन्धनादेः ॥ नद्युत्तारस्तैन्यदुर्गादिरोधयुद्धादीनांचिन्तनंवैपथोपि ॥ १ ॥ धनवदस्यफलंप्रभुताविधोरिहखलाधननाशकरामताः ॥ शुभखगाधनदाअथदुर्ग्रहैर्व्रणतिलादिसभार्यन्गुह्यगम् ॥ २ ॥

त्तेः छिद्राणां गुह्यानां नद्युत्तारस्यनदीममुकउत्तीर्यपारंगतोनवेतिजिज्ञासितस्यउत्तरणमुत्तार इति यद्वा नद्युत्तारात् घाटइति प्रसिद्धाद्राजद्वारा मम लाभोभावीनवेतिजिज्ञासितस्य स्तैन्यस्यचौर्यस्यदुर्गादीत्यादिपदात्सेनारोधादेः पथोमार्गस्यतत्सुखदुःखादेरित्यर्थः॥ १॥सामान्यतोऽष्टमस्थग्रहफलमाह धनवदितिद्वितीयभाववदित्यर्थःप्रभुताविधोः तत्र चन्द्रे बलवति सति प्रभुता स्यात् अथदु

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

ग्रहैरष्टमे पापैर्दुर्बलैश्च सभार्यस्य तस्य गुह्यस्थाने व्रणतिलादिवाच्यमिति ॥ २ ॥ खलेति दुर्गजयप्रश्नेन दुर्गजयोद्भुतं निगडमुक्तिप्रश्ने तु पापैरष्टमगैर्द्भुतं निगडमुक्तिः नौप्रश्ने नौरायास्यति सुखेन शेषं स्पष्टम् ॥ ३ ॥ आयुष इयत्ताज्ञानायाह खेरिपाविति पुनरायुषो दीर्घमध्यमाल्पत्वस्यैव प्रकारांतरं लग्नेश्वरे इति स्पष्टार्थः श्लोकः ॥ ४ ॥ अथजैमिनिमतमनुसृत्य प्रकारत्रयेण दीर्घमध्याल्पायु

खलखगैर्मृतिगैर्बहुरुग्व्यथाद्भुतमद्दुर्गजयः कलहश्चिरम् ॥ यधिवधःसुभटश्रमतोद्भूतंनिगडमुक्तिरुपैत्यपि नौःसुखम् ॥ ३ ॥ खेरिपौलग्नपतौकुशायुःपूर्णायुरिष्टेचसमेसमायुः ॥ लग्नेश्वरेमित्रसमारिधामप्राप्ते पिपूर्णसममल्पमायुः ॥ ४ ॥ जन्मलग्नपतिरष्टमाधिपश्चेदुभौ चरभगामिनौन्नृणाम् ॥ वास्थिरद्वितनुरा शिगौतदादीर्घमायुरुदितंमहर्षिभिः ॥ ५ ॥ चरास्थिरगतौयदिद्वितनुगौचवामध्यमंचर द्वितनुगौयदिस्थिरभ गौचबाल्यंतदा ॥ इहायुरुदितांद्वितीयमुदयोडुपाभ्यांतथातृतीयमुदितंपुनःस्वजननांगहोराङ्गतः ॥ ६ ॥

योगानाह जन्मलग्नेति जन्मलग्नेशाष्टमेशावुभावेवचरराशिगौ अथवास्थिरद्विस्वभावोभयगौ एकः स्थिरे एको द्विस्वभावे तदा दीर्घायुर्योग इत्यर्थः ॥ ५ ॥ चरेति यदि लग्नाष्टमेशौ चरस्थिरोभयगौ एकश्चरे एकः स्थिरे प्राग्वत् अथवा उभौद्विस्वभावगावेवत दा मध्यमायुर्योगः पुनर्यदितौ चरद्विस्वभावोभयगौ पूर्ववत् अथवा स्थिरगावेव तदाल्पायुर्योगः इह प्रथमप्रकारेण आयुरुदितं



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

द्वितीयं द्वितीयप्रकारेणतु यथा लग्नेशाष्टमेशाभ्यां प्रथममुक्तं तथा द्वितीयग्र इदयोडुपाभ्यां लग्नचंद्राभ्यां ज्ञेयम् एवं मंदचन्द्राभ्यामिति सूत्रानुसारात्तथाहि यदि चरस्थावेव लग्नचंद्रौ अथवा स्थिरद्विस्वभावोभयगौ प्राग्वत् तदा दीर्घायुःयदा द्वितनुगौ अथवा चर स्थिरोभयगौ तदा मध्यायुः पुनर्यदि स्थिरगावेव अथवा चरद्विस्वभावोभयगौ तदाल्पायुः तृतीयं तृतीयप्रकारेण तु स्वजननांग होरांगतः जन्मलग्नहोरालग्नाभ्यां पूर्ववदेव दीर्घमध्याल्पान्यायूंषिज्ञेयानि होरालग्नमनंतरश्लोक एव वक्ष्यति ॥ ६ ॥ नन्वनेकैः प्र कारैरुपदिष्टानामायुषां मध्ये कस्य प्रामाण्यमित्याकांक्षायामाह संवादादिति एकत्रनिर्दिष्टस्य पुनरन्यत्र तथा निर्देशनं संवादः

संवादात्प्रामाण्यमुक्तायुषींदं राश्यादौनान्तेनुपातोंतरास्यात्॥
ओजेजन्मांगेतुसूर्यर्क्षतःस्याद्धोरालग्नंजन्मलग्नात्समेतत् ॥ ७ ॥

तथाच द्वाभ्यां त्रिभिर्वाप्रकारैः समाने आयुष्यागतेयन्मानं सिद्धं तदेव प्रमाणं विसंवादेतु वक्ष्यमाणमारकग्रहदशांतमायुर्ज्ञेयमिति भावः तत्र विशेषमाह राश्यादाविति चरभाद्युक्तं पूर्वमायूराश्यादावेव तत्कारकग्रहसत्त्वेज्ञेयं राश्यंतेतुशून्यंमध्येऽनुपातः तथाहि यदि राशेरादिमांशे वर्त्तमानौ तौ द्वात्रिंशद्वर्षाण्यायुर्यच्छतस्तदैभिरंशैः कतीति तत्र द्वात्रिंशदादिवर्षाणामल्पायुर्मानत्वादौ प्रमाणं तुद्वात्रिंशत्पूर्वमल्पंस्यात्तदूर्ध्वंमध्यमं भवेत् आसप्ततिस्तदूर्ध्वंतु दीर्घायुरिति वृद्धवचनं शतायुर्वै पुरुष इतिश्रुतेरपि शतांतमेव दीर्घा युरिति अत्रेदंबोध्यं प्रतिखंडं द्वात्रिंशद्द्वात्रिंशद्वर्षाणि भवंति यदि संवादान्मध्यममायुरागतं तदा तत्र प्रथमखंडे द्वात्रिंशद्वर्षरूपे

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

 

संदेहाभावःअग्रेनुपातेन लग्नाष्टमेशाद्योः पृथक् पृथग्वर्षाण्यानीयतद्योगार्द्धंमध्यमायुःसंबधित्वात्पूर्वखंडयुक्तमायुर्भवति यदि पूर्व खंडाभावस्तदैतदेवायुः यदि दीर्घायुः सबधि तदा मध्यमायुषि योज्यमेवंरीत्यायुर्निर्णयः कायः तथा लग्नाष्टमाद्योरेकस्वामिकत्वे तत्स्वामिनोरेकराशिस्तत्त्वेपिचोक्तचरभेत्यादिरीत्यैवायुर्निर्णय इति केचित्तु प्रकारत्रयसंवादाभावे तदानीतानां त्रयाणामायु षांयोगस्तृतीयांश एवायुरित्याहुः अथ होरालग्नस्यात्राप्रसिद्धत्वात्तदज्ञाने तद्धटितायुर्ज्ञानं कथमित्यतआह ओजेइति जन्मलग्ने ओजे विषमेसति मेषमिथुनादिरूपे सूर्योराशितः सूर्योयस्मिन् राशौ ततः समेतु जन्मलग्नादेव होरालग्नं गणनीयं तत्र होरानाम

दशायांमारकेशस्यमारकस्थस्यपापिनः ॥
सम्बन्धिनोस्यवापाकेनिधनंसम्भवेवदेत् ॥ ८ ॥

सार्द्धघटीद्वयमितोदिनखंडः अहोरात्रे चतुर्विंशतिर्होराभवंति होरालग्नस्पष्टीकरणायोदाहरणं कर्कलग्नेकस्यचित् सूर्योद या९।१० दिष्टेजन्म तत्र लग्ने समराशिः ततश्चतुथ तुलाख्यंहोरालग्नं सार्द्धसप्तघटीपयतं कन्यालग्नं समाप्तं ततोनुपातः सार्द्ध घटीद्वयेन चेत्त्रिंशदंशालभ्यंते तदा १।४ नेनकिमिति लब्ध २० मंशाः तथाच सिद्धं होरालग्नं ६।२० तदुक्तं तथा सार्द्धद्विघटिका मितात्कालाद्विलग्नभात् प्रयाति लग्नं तन्नाम होरालग्नं प्रचक्षते एवं विषमेजन्मलग्ने सूर्यर्क्षादेवमुदाहरणीयम् इष्टं सर्वत्र सूर्योदया दिति ॥ ७ ॥ अथ कस्य दशायांनिधनादीत्याकांक्षायामाह दशायामिति लग्नात्तृतीयाष्टमाभ्यांव्ययस्थानयोर्लग्नाद्वितीयसप्तमयोर्मा

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

रकस्थानसंज्ञातदीशयोस्तत्रस्थग्रहाणांचमारकसंज्ञा तत्र मारकेशग्रहदशादौ मारकस्थस्य पापिनो वा दशादौ संभवेसति निधनं वदेत् तस्याप्यभावेऽस्य संबंधिनः संबंधचतुष्टयान्यतमसंबंधवतःपाके संबंधास्तु दृष्टिस्थानराशिमित्रत्वाद्यादिप्रयुक्ताः ॥ ८ ॥ तत्राप्यसंभवे व्ययपस्यपाकेऽस्य संबंधिनोवा तत्राप्यसंभवेऽष्टमपस्यपाके मारकसंबंधित्वादिधर्मवतः पाके तत्राप्यसंभवेवितारधिपतेः जन्म विपत्प्रत्यरिवधसंज्ञकविरुद्धताराधिपतेर्ग्रहस्यदशादौ निधनंवाच्यं प्रसंगादमितायुर्योगमाह खांगेति दशमेश

असम्भवेतुव्ययपस्यवास्यसम्बन्धिनोवाष्टमपस्यपाके ॥ मृत्युर्वितारधिपतेश्चपाकेखांगाष्टपाश्चेद्बलिनो
ऽधिकायुः ॥ ९ ॥ पापःशनिश्चापिनृणांनिहन्तासम्बन्धतोमारकखेचराणाम् ॥ तमोग्रहौयाद्दशभावयातौया
दृग्युतौतस्यफलंदिशेताम् ॥ १० ॥ अग्युतौनिधनेक्षितिजार्कजौयदितदापमृतिःकिलशस्त्रतः ॥ रिपुखलै
र्निधनेयदिवीक्षितःशुभखगोपितथायुधिमृत्युकृत् ॥ ११ ॥ ॥ इत्यष्टमः ॥ ८ ॥

लग्नेशाष्टमेशास्त्रय एवोत्तमबलाश्चेदमितायुः ॥ ९ ॥ आग्य मारकस्यापि शनेः क्वचिन्मारकतामाह पापइति त्रिषडायाधिपतित्व प्रयुक्तपापत्ववान् शनिःस्वदशादौ मारकोपि भवति परंतु मारकग्रहसंबंधे सत्येव नान्यथा कष्टकारित्वंतु तदापीति राहुकेत्वो र्विशेषमाह तमोग्रहाविति स्पष्टम् ॥ १० ॥ मृत्यौ विशेषमाह अग्युताविति युद्धेनिधनयोगः रिपुखलैरिति शत्रुभूतैः पापैरित्यर्थः अत्रेदमपि अष्टमस्थेरवौ वह्नेश्चंद्रेतु जलयोगतः॥करवालात्कुजे ज्ञेयं मरणं ज्वरतोबुधे॥गुरौत्रिदोषतः शुक्रे क्षुधयातृषयाशनौ ॥ चरस्थि

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

रद्विस्वभावैः परदेशे गृहे पथीति ॥ ११ ॥ इत्यष्टमभावः ॥ ८ ॥ अथ नवमभावफलप्रतिपादयिषया तत्पर्यायांस्तत्रोद्देश्यपदा र्थांश्चाह भाग्यस्थानमिति भाग्यं नवमम् ऊरुसंज्ञं कालपुरुषस्य केचित्तद्वामंचरणं तस्याहुः अत्रनिर्देश्यपदार्थानाह पूर्णेत्यादि प्रसादो देवभूभुजां अंधुः कूपः स्पष्टमन्यत् ॥ १ ॥ तृतीयवदत्रापि भ्रातुः स्वदेशे देशांतरेवा भाग्योदयस्यच सदसत्त्वादिप्रयुक्ति माह यद्विक्रमे इति स्पष्टम् ॥ २ ॥ व्रणादिदुर्नखत्वादियोगान्भ्रातृभगिनीस्वभाग्योदयादियोगांश्चाह सक्रूरेइति नवमे सक्रूरे निज

भाग्यस्थानंचोरुसंज्ञंशुभादेर्वामांघ्रितत्केचिदाहुस्तथात्र॥ पुण्यप्रासादांधुवाप्यादियज्ञतीर्थाप्त्यादेःसत्क्रिया देर्विचारः ॥ १ ॥ यद्विक्रमेनुजफलंतदिहापिवाच्यंसौम्येऽधिपेशुभयुतेत्रशुभंसमस्तम् ॥ इन्दोस्तनोश्चनव मेस्वपतीक्षितादयं भाग्यंस्वदेशउदियाद्विषयान्तरेन्यैः ॥ २ ॥ सक्रूरेसगदोव्रणोनिजपदेऽगौदुर्नखोऽस्थि व्यथोऽत्रारेऽग्न्यादिविषार्दितःससहजःपुंसद्ग्रहैर्भाग्यगैः ॥ स्त्रीखेटैर्भगिनीशुभैर्बहुविधंभाग्यंस्वतुंगेबली लग्नभ्रातृसुतेषुकोपिनवमंपश्यन्ध्रुवंभाग्यदः ॥ ३ ॥

पदेसगदोव्रणः अगौराहौ नवमस्थे दुर्नखता अस्थिषुव्यथाच तस्य अत्र नवमेभौमे अग्निना विषादिभिश्च पीडा तत्र पुंभिः सद्ग्रहैः शिशुःसहजवान् स्त्रीग्रहैर्भगिनीयुक्तः शुभैस्तत्र बलिष्ठैर्भाग्यजिज्ञासायां बहुधा भाग्यं वाच्यं निश्चयेन भाग्ययोगमाह स्वतुंगे इति लग्नेतृतीये पंचमेवा वर्त्तमानः स्वोच्चगो बलिष्ठः कोपिग्रहो नवमं पश्यन् ध्रुवमवश्यं भाग्यदोभवतीत्यर्थः ॥ ३ ॥

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

ईदृशस्य योगस्यराजयोगेपिप्रयोजकतां दर्शयति भाग्येइति भाग्येस्वतुंगे स्वपरमोच्चे सुखगो गुरुशुक्रादिः शोभनोग्रहश्चेत् तत्र पूर्वोक्तयोगेसति नृपत्वं अब्धिपादैः पूर्णराजयोगः पूर्णइत्यर्थः परंतु भाग्यस्थस्य शुभग्रहदृष्टियोगसत्त्वे एव तत्रमंदकुजयोस्तथात्वे शुभग्रहापेक्षयाऽर्द्धंफलं योगदलमित्यर्थः शुभेइति शुभेसौम्यग्रहे दुर्बलेऽपिनवमगेसति पुरुषोयागादिधर्मसत्कर्मकर्त्तेत्यर्थः ॥४॥ जीवनावच्छिन्नत्वे भाग्ययोगादेर्योगमाह यावज्जीवमिति लग्ननाथेऽदृश्यार्द्धस्थेसति पुरुषोयावज्जीवं भाग्यवान् जीवनव्यापकभाग्यवान्

भाग्येस्वतुंगेसुखगोब्धिपादैर्योगेनृपत्वंशुभदृग्युतश्चेत् ॥ मन्देकुजेभाग्यगतेतथार्द्धंशुभेङ्गेधर्मपरोऽबलेपि ॥ ४ ॥ यावज्जीवंभाग्यवान्लग्ननाथेऽदृश्यार्द्धस्थेचंद्रपेवाथभाग्ये ॥ भौमेंद्वोर्मातृक्षयोऽल्पायुरर्केंद्वोश्चित्रो मृत्युर्यदार्केंदुभौमाः ॥ ५ ॥ तनुभाग्यमृतीश्वरागृहंयदिपश्येयुरिमेनिजंनिजम् ॥ अथवा नवमंशुभान्वि तंखलहीनंपुरुषोत्रमुक्तिभाक् ॥ ६॥ इतिनवमः ॥ ९ ॥

अदृश्यखंडस्तु सप्तमादिलग्नांतभावषट्कम् अथ भौमचंद्रयोर्द्वयोरेव भाग्यस्थत्वे बाल्यएवशिशोर्मातृहानिः अर्केन्द्वोर्नवमस्थत्वेत्वल्पायुः स्वयंशिशुः यदार्केन्दुभौमास्त्रयएवनवमे स्युस्तदा पुरुषस्य चित्रोमृत्युः कुत्सितस्थाने कुत्सितं वा मरणमित्यर्थः अत्र शुक्रचंद्रोनवमे चेत्तदा वनिता कुटिलास्यात् पापदृष्टौत्वतिशयेनेति स्त्रियाश्चेत्पत्युः कौटिल्यंवाच्यमित्यपिबोध्यम् ॥५॥ मोक्षयोगद्वयमाह तनुभाग्येति यदिलग्ननवमाष्टमेशा बलिष्ठाः संतः पूर्णदृष्ट्या स्वं स्वं गृहंपश्येयुस्तदापुरुषस्य मोक्षइत्येको मोक्षयोगः तथानवमं शुभैरेवा

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

न्वितं संबद्धम् एवकारार्थमाह खलहीनमिति सर्वथापापसंबंधरहितं तदापिपुरुषो मुक्तिभाक्मुक्तःस्यादित्यर्थः॥ ६॥इतिनवमोभावः॥९॥
अथदशमभावफलविवक्षयातस्यपर्यायस्थानविचार्यप्रदेशादीन्निर्दिशति जानुद्वयमिति कालपुरुषस्यजानुदेशेदशमभाव इतिऊरूततो
जानुनीत्याचार्योक्तेः पृष्ठवंशस्यैतन्नाम कस्यास्थिविशेषस्य व्यापारादेश्चस्थानम् एतेषांतत्रमुद्रापदाप्त्यादेश्च सदसत्फलंविचार्य वाच्य
मित्यर्थः॥ १॥विचारेति कर्त्तव्यतामाह मातृपक्षेति यथातुर्यगैर्मातृपक्षे शुभाशुभं तथाकर्मगैःपितृपक्षेशुभाशुभं ज्ञेयमिति कर्मपइति स्प

जानुद्वयंदशममत्रचपृष्ठवंशव्यापारवृत्तिपितृपक्षनृपास्पदादेः ॥ मुद्रापदाप्तिसुखकेतनवृष्ट्यवृष्टिकर्मान्व
यादिसकलं सफलंविचार्यम् ॥ १ ॥ मातृपक्षेयथातुर्यगःखेचरैस्तातपक्षेपिवाच्यंतथाकर्मगैः ॥ कर्मपःस
द्ग्रहःसद्बलःसद्युतोवेष्टदृष्टाःशुभाःखेयदालंशुभम् ॥ २ ॥ सुखेखिलोब्जःसबलोभृगुर्मदेयदाखगोज्ञोस्तित
दानभःशुभम् ॥ ससोदराम्बापितृभूसुखंगुरुःसितोज्ञइंदुःसकलोत्रराज्यदः ॥ ३ ॥

ष्टोर्थः ॥२॥ दशमस्य शुभफलकत्वयोगमाह सुखेइति पूर्णश्चंद्रश्चतुर्थे सबलः शुक्रः सप्तमे एवंबली दशमे बुधश्चेत्तदानभो दशमं शुभं
सर्वथा शुभफलकं तत्रगुरुरपि चेत्तदा सभ्रातृमातृपितृजन्यं सुखंतद्विशिष्टपृथ्वीसुखं चावश्यं ज्ञेयमिति अत्रराजयोगमप्याह सितइति
यदिगुरुबुधशुक्रपूर्णचंद्रादशमे स्युस्तदाराजयोगः अत्रेदंचिन्त्यं शुक्रबुधयोः पूर्णचन्द्रसामानाधिकरण्यस्यासंभवदुक्तिकत्वेन पूर्णस्यै
कस्यैव चन्द्रस्यताहशराजयोगप्रयोजकत्वं गुर्वादीनां तु यथासंभवंतत्रदृष्टियोगाद्यपेक्षा अतएव चतुर्थेभवने सूर्याज्ज्ञसितौ भवतः कथ

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

मित्याचार्योक्तिरप्यनुकूला केचित्तु तत्रबुधशुक्रयोरपिगुरुवदेवफलमूह्यं चंद्रस्तुकेवलएवपूर्णोबली प्रकृतयोगोपयोगीत्याहुः ॥ ३ ॥ स्वकुलेस्त्रीपुरुषान्यतमप्राधान्ययोगं सुखादियोगंचाह पुंस्त्रीग्रहैरिति प्रधानाइतिशेषः अत्र शुभेक्षिताः शुभाःशुभाएव सुरेज्येस ति तत्र पुरुषाः सुखिनः अत्र श्लोके योगाश्चत्वार इति ॥ ४ ॥ दशमे पापयोगादौ फलविशेषमाह वंशेइति सूर्येवंशे दशमेसति

पुंस्त्रीग्रहैःपुंवनिता कुलेस्युःसौम्येक्षिताअत्रशुभाःसुखेटः ॥ नराःसुरेज्येसुखिनस्तथार्केसत्कर्मवृद्धिः शु भदृष्टयुक्ते ॥ ४ ॥ वंशेव्यथार्केसतिजानुदेशेभौमेतुशस्त्रव्रणवह्निघाताः ॥ शनावहौवानिलदोषबाधापित्रोः स्त्रियाः स्वस्यचलक्ष्मकृष्णम् ॥ ५ ॥ सार्क्यर्कराहुरिहमृत्यवआरदृष्टयादेशांतरेपितुरिदंखलयुक्तदृष्टम् ॥ वामिश्रदृष्टमपिपापभमत्रराजभीतिःप्रसूवियुतिरिष्टफलंतुनस्यात् ॥ ६ ॥

जानुदेशेव्यथा सूर्यदृष्टे दशमे इत्यपिज्ञेयं यद्वा वंशं पृष्ठवंशेपि कश्चित्तुवंशे पितृकुले कृत्यादिप्रयुक्ता व्यथेत्याह भौमेत्वित्यादिस्प ष्टम् ॥ ५ ॥ पुनः पित्रोरनिष्टयोगादिकमाह सार्कीति सशनिः सूर्यो राहुभौमदृष्टश्चेद्दशमेस्यात्तदा देशांतरे पितृमृत्युकरः पुनर्यदा दशमे पापभं पापग्रहैर्युक्तं दृष्ट्वा वामिश्रदृष्टं वाकारोप्यर्थे तदा पितुरसत् मिश्रदृष्टमित्यस्य काकाक्षिन्यायेनोभयत्रान्वयः पापा

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

पापोभयदृष्टं पापभंचेत् राजभयादिफलमिति ॥ ६ ॥ पुनः पितुरनिष्टयोगं वृष्टौविशेषफलंचाह सूर्यइति यदाराहुशनिभ्यांदृष्टः पापर्क्षे दशमे सूर्यःस्यात्तदा राहुशनिसूर्यान्यतमदशादावेव पितृमरणंवाच्यं वृष्टिप्रश्नेवृष्टिशुभाशुभत्वेप्येवंवाच्ये पृच्छातनौ वृष्टिप्रश्नलग्ने शुभैर्दशमस्थैः चंद्रेचसद्ग्रहदृष्टे बलिनि सुवृष्टिः अघैः पापैर्दशमस्थैः चंद्रेच पापदृष्टेऽवृष्टिरितिवाच्यम् ॥ ७ ॥ अथात्र जातस्य शिशोः कया वृत्त्यानिर्वाह इति जिज्ञासायामाह खेंगादिति लग्नात् दशमे बली यो ग्रहो वर्त्तते दशमंपश्यतिवा तस्य वृत्तिर्जी वनोपायत्वेन निर्देश्या प्रकारांतरेणतामाह यद्वेति अंगविधिवनाः लग्नचन्द्रसूर्यास्तेभ्यः स्वस्वदशमभावेषु तत्काले प्रत्येकं वर्त्त

सूर्योयदाहिशनिदृष्टइहाशुभर्क्षेतातस्यमृत्युरथवृष्टिशुभाशुभत्वे ॥ पृच्छातनौशुभखगैर्दशमस्थितैर्वाब्जेसद्
शायुजिसुवृष्टिरघैरवृष्टिः ॥ ७ ॥ खेंगाद्बलीयइहतस्यचवृत्तिरुक्तायद्वांगविधिवनखगांशपपुष्टवृत्तिः॥ लग्नाद्ब
लीयदिखगोविधुरस्यवृत्तिर्वाच्यावचोविधिवणिज्यकलाविलासैः ॥ ८ ॥

माननवांशत्रितयस्ययये स्वामिनस्तेषु मध्येयोनवांशेशः पुष्टो बलवानुदितस्तस्य ग्रहस्य वृत्तिर्वा वाच्या ननु प्रत्येकं तत्तद्ग्रहप्रयु क्तवृत्तिज्ञानाभावे इयमस्य वृत्तिरिति कथं निर्देष्टुं विद्वानर्हःस्यादित्यतःप्रत्येकं ग्रहाणांवृत्तिं निरूपयति लग्नादिति लग्नाद्यदि दशमे बलिष्ठश्चंद्रस्तदा तस्य वृत्तिर्वाक्यप्रयोगवाणिज्यचातुर्यादिभिः वणिज्येत्यत्रगोद्व्यचोः संख्यापरिमाणाश्वादेरिति यत्प्रत्यये वृद्धिप्रयो जकप्रत्ययाभावाद्वृद्धेर्वैकल्पिकत्वाद्वा वृद्ध्यभावः कलानां नानाविधानां विलासो वैशद्यज्ञानं तैर्विविधैरित्यर्थः ॥ ८ ॥



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

सूर्यस्यवृत्तिमाह अर्थदोरिति चंद्राल्लग्नाद्वा बलिष्ठेगगनगे सूर्ये नानोद्यमादिभिर्वृत्तिः अत्र स्वस्माद्दशमेस्वस्यासंभवेन पूर्वश्लोके चंद्रवृत्तिज्ञापकेन चंद्रस्योपादानंकृतं केचित्तु तात्कालिकनक्षत्रद्वारा चंद्रमुत्पाद्यप्रसिद्धचंद्राद्द्वितीयचंद्रसंभवे चंद्राद्दशमे चंद्रस्यापिसत्वेदिनकृतीति चंद्रस्याप्युपलक्षकमित्याहुः तदा खेंगादित्यत्राप्यंगपदं चंद्रोपलक्षकं बोध्यमिति ॥ ९ ॥ लग्नें

अर्थेंदोर्लग्नाद्वादिनकृतिबलिष्ठेगगनगेभवेद्वृत्तिर्नानोद्यमसमधिगम्यार्थनिचयैः ॥ कुजेताभ्यांखस्थेसततखलवृत्तिःस्ववसतिःस्वदेशाद्दूरेस्याद्विविधविषयासक्तधिषणा ॥ ९ ॥ लग्नेन्दुखेयदिबुधोबहुनायकत्वंसच्छिल्पकाव्यकलयाधनितापटुत्वम् ॥ लग्नेन्दुखेयदिगुरुर्बहुवैभवाप्तिर्भूयाद्गुरुत्वमपिसात्त्विकचित्तवृत्तिः॥१०॥ लग्नेन्दुखेयदिभृगुर्विजयीसुजीवोभूपप्रियःस्मररुचेष्टकलाकलापैः ॥ लग्नेंदुखेयदिशनिः खलवृत्तिरंगेकार्श्यंप्रयाससहिताचविवादबाधा ॥ ११ ॥ इंदोस्तनोश्चखभगैः क्रमतोर्थलब्धिस्ताततांबिकारिहितसोदरदारपुंभ्यः ॥ सूर्यादिभिस्तनुरवींदुखपांशनाथवृत्त्याथवृत्तिरुदिताकनकौषधाद्यैः ॥ १२ ॥

दुखेइति श्लोकद्वयंस्पष्टार्थम् ॥ १० ॥ ११ ॥ अथास्यपित्रादीनां मध्यतः कस्माद्वृत्तिलाभः कस्माद्वस्तुनो व्यापाराद्वाधनलाभइत्याकांक्षायामाह इन्दोरिति चंद्रलग्नान्यतरस्माद्दशमस्थैः सूर्यादिभिः क्रमेणार्थलब्धिर्निर्देश्या तथाहि लग्नाच्चंद्राद्वा सूर्येगगनगे ताता

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

चंद्रेगगनगे मातुः भौमेशत्रोः बुधेहितान्मित्रात् गुरौ सोदराद्भ्रातुः शुक्रेदारेभ्यः शनौहीनपुरुषात् कयावृत्त्यापित्रादिभ्योर्थलाभ इति जिज्ञासायामाह तनुरवीत्यादि लग्नसूर्यचंद्रेभ्यो दशमेशेषुग्रहेषुमध्येयो बलवान्नीचमूढादिभिन्नःसयस्मिन्नवांशेतन्नवांशस्वामिनः पूर्वो कयावृत्त्या अथवाऽनंतरमेववृत्तिरुदितेत्यादिनावक्ष्यमाणयावृत्त्यार्थलाभादिर्ज्ञेय इति तामेवाह वृत्तिरुदितेति अत्राग्रिमश्लोकस्थाभ्यां ग्रहाणामहस्करतइतिपदाभ्यां वृत्तिरुदितेतिपदद्वयमन्वेति तथाच अहस्करतः सूर्यमारभ्य सर्वेषां ग्रहणांक्रमेणकनकौषधाद्यैरि

कृष्यन्ननीरजमुखैःखलसाहसाग्निशस्त्रादिभिर्लिपिकवित्ववचःकलाभिः ॥ धर्मामरादिभिरतिप्रियरूपरत्न स्त्र्याद्यैःकुकर्मभिरहस्करतोग्रहाणाम् ॥१३॥ यस्यांशेस्यात्कर्मपस्तत्क्रियाभिर्वृत्तिर्मित्राद्यैस्तथावीर्ययुक्ताः ॥ सौम्याःखेटाआयतन्वर्थसंस्थाः पुंसांकुर्युःकोशभूसौख्यकीर्तीः ॥ १४ ॥ ॥ इतिदशमभावः ॥

त्यादिनाप्रत्येकं वृत्तिरुदितेत्यन्वयः शेषंस्पष्टम् ॥ १२ ॥ १३॥ अर्थलाभादौविशेषमाह यस्यांशेइति सूर्यचंद्रलग्नेषु अन्यतमाद्बलिष्ठोयः कर्मपः सयस्यनवांशेस्यात्तत्क्रियाभिर्वृत्तिर्भवतीति तत्रापि विशेषमाह मित्राद्यैरिति यदिकर्मेशोमित्रांशेस्यात्तदा मित्रद्वारा यद्यरा त्यंशेतदाशत्रुतः यदिसमांशेस्यात्तदा मध्यस्थपुरुषादितइति प्रतिष्ठाधनादियोगमाह तथावीर्ययुक्ता इति सौम्यग्रहाः सर्वे ष ड्विधबलोपेतालाभलग्नद्वितीयस्थाश्चेत्स्युः तदापुंसांकोशभूसौख्यकीर्तीस्तत्तोत्तरमुपचिताः कुर्युरित्यर्थः ॥ १४॥ इतिदशमभावः ॥१०॥



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

अथैकादशभावफलप्रतिपादनेच्छया तत्पर्यायंतत्र चिंतनीयपदार्थांश्च निर्दिशति दक्षांघ्रिरिति आयभम् एकादशभावरा शिः कालपुरुषस्यदक्षांघ्रिः तथासएवतस्य दक्षकरो वामः करश्च तथाद्रे एव जंघे अपि तस्य ज्ञेये तथाचैकादशभावे कालस्यो क्तान्यंगानिग्रहसंबंधात्सत्त्वासत्त्वादिना विमृश्यतदानुगुण्येन पुरुषाणां तत्तदंगेषु फलं वक्तव्यम् एवं विद्यागमादीनामपि तथाहस्त्या दियानानां तथावसनादेरपिसदसत्त्वादिकमत्रैव विचार्य वाच्यम् ॥ १ ॥ लाघवात्पंचमभावोक्तं फलमत्राप्यतिदिशति यथाग्रहैरिति यथापंचमविचारेतत्रपंचमस्थानगैर्नराणां फलमुक्तं तथा पंचमगैरेवात्रापि शुभाशुभंज्ञेयं यद्वा यथापंचमगैः पंचमस्य सदसत्फलं

दक्षांघ्रिरायभमदक्षकरश्चजंघेविद्यागमद्रविणमत्रसदादिचिंत्यम् ॥ हस्त्यश्वयानशिबिकारथहेमभूषाद्यांदो लिकावसनमंगलमण्डनादेः ॥ १ ॥ यथाग्रहैःपंचमगैःफलंतथायनायकेसद्बलिनिध्रुवंशुभम् ॥ ग्रहैः सम स्तैररिनीचदुर्भगेतरैःश्रियोनंतसुखावहानृणाम् ॥ २ ॥

तथायगैरायस्यापिफलमिति सादृश्यं किंचात्रविशेषमाह आयनायके इति आयनाथे सद्बलविशिष्टे ध्रुवं निश्चयेन शुभं ज्ञेयं किंच समस्तैरेव पापैर्वा सौम्यैर्वा ग्रहैरारिनीचदुर्भगेतरैः शत्रुनीचपापादिसंबंधरहितैः सद्भिरत्रैकादशे नृणामनंतसुखावहाः पुत्रपौत्रा दिधनराज्यादिसमृद्धिप्रत्युक्ताः श्रियः स्युः अत्र यद्येकोपि दोषविधुरःस्फुरद्रश्मिजालः पुष्टोग्रहो विद्यमानोनेकदेशादिप्रभुत्वा धायकस्तदा बहूनां तत्र तथात्वे किमिष्टं नस्यादित्यापत्त्यावसीयते ॥ २ ॥

८

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

ग्रहविशेषात्फले विशेषमाह लाभेइति कुजार्क्यगवो लाभे गजादिसुखदाः बुधे शय्यादिसुखं शुक्रे नृयानं चन्द्रेज्ययोः स्वस्त्रीसुखं बुधे इष्टविद्यापि पुनस्तत्राब्जे सितेच कन्या पुनर्गुरौ पुत्रोपीति ॥ ३ ॥ पुनर्विशेषमाह सर्वेभावाइति आये अधिवीर्ये ज्ञे पूर्णबलवति बुधे सति सर्वेलग्नाद्याभावाः संतोज्ञेयाः [अयमर्थः लाभस्योक्तविधगुणवदादिसंबंधे सत्यन्येषां दोषप्राचुर्येपिना।निष्टफलता एकोपि शब्दः

लाभेकुजार्क्यगुयुतेगजवाजिराजिःशय्यासुखं विधुसुतेभृगुजे नृयानम्॥ चंद्रेज्ययोःस्ववनितासुखमिष्ट
विद्याज्ञेब्जेसितेत्रतनयातनयः सुरेज्ये ॥ ३ ॥ सर्वे भावाः सन्तआयेधिवीर्येज्ञेस्याच्चंद्रे कूपयज्ञादिसिद्धिः ॥
चेदर्कारौस्त्रीग्रहैर्ज्ञेनचाढ्यो बह्व्योजीवंत्यस्य पुत्र्यो न पुत्राः ॥ ४ ॥ राहुःशनिश्च यदि दारुशिलाहति
स्तत्रांगेखलेक्षणवशाच्छुनकादिभीतिः॥राहाविहास्थिरसुतः स्थविरे यदि स्याज्जीवेच्छनावपिचसन्धि
गतेऽप्रजःस्यात् ॥ ५ ॥

सुप्रयुक्तः स्वर्गादौ कामधुग्भवतीतिन्यायात् चन्द्रे तत्र तथाविधे कूपयज्ञादिकर्त्ता कन्यायोगमाह चेदर्काराविति स्त्रीग्रहैर्बुधेनच युतावर्कारौ तत्रचेत्कन्यासंततिसन्ततो नरः ॥ ४ ॥ तत्रपापविशेषेऽनिष्टफलविशेषमाह राहुरिति राहुशनीचेत्तत्रांगे काष्ठादिघातः तत्रापिपापदृष्टौश्वव्याघ्रादिभयं पुनाराहौ सति यौवने पुत्रजीवनं न वाच्यं यदि वृद्धावस्थायां भाग्यवशात्पुत्रो जायेत तदा जी



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

वेदपि शनेरतोपि निंद्यफलमाह शनावपीति संधिर्भावयोस्तत्तुल्यस्पष्टे शनौ जनः प्रजारहितः स्यात् ॥ ५ ॥ पुनः पापेष्वेव विशेषः वामेति इहैकादशे दोषवत्कुजार्कयोः सत्त्वे वामभागे लग्नौ भुजपादौ अर्थाद्वामावेव वातादिदोषेण जडौ तत्प्रयुक्तपीडया पुरुषो नित्यं दुःखीस्यात् वा अथवा लग्नजंघः लग्ने जंघेयस्य जंघाजाड्यप्रयुक्तदुःखेन दुःखितः स्यादित्यर्थः क्वचिदंशे रवेरत्र शुभफल मप्याह चेद्रवाविति एकादशे स्वषड्वर्गगे पूर्णबले रवौ सति भूपचौरपश्वादिभिर्नानाऽसदुपायैस्तस्य नानाधनाप्तयोज्ञेयाः ॥ ६ ॥

वामलग्नभुजपादजव्यथोलग्नजंघइहवाकुजार्कयोः ॥ चेद्रवावधिबलेस्ववर्गगेभूपचौरपशुभिर्धनाप्तयः ॥६॥

एवमत्रसकलैर्ग्रहैः फलं स्वस्ववर्गबलयुग्भिरायगैः ॥ स्वस्वभाववशतःपुरोक्तवत्तारतम्यमुदितंपुरातनैः॥७॥

आयस्थानेसद्ग्रहैर्दृष्टयुक्तेसतखेटानांवर्गगेऽनल्पलाभः ॥ चेदेकोप्यत्रस्वषड्वर्गशुद्धःसर्वैर्दृष्टस्तत्रजातोनृपः स्यात् ॥ ८ ॥ इत्येकादशभावः ॥ ११ ॥

किमुतैवं भूतस्यरवेरेव फलमितिनतु किंत्वन्येषामप्येवंभूतानामिष्टमेवेति पूर्वसूचितं स्पष्टयति एवमत्रेति अत्र एकादशे स्वस्व भाववशतः स्वकीयस्वभाववशेन सर्वेग्रहास्तत्रेष्टमेवाधिकं वितरंति यद्वा स्वस्वेयेभावाः दृष्टियोगविधेयत्वादिना संबद्धास्तदनुसा रेण शुभमेवस्वंस्वं फलं यच्छंति तत्र पुरोक्तवत्तारतम्यमपि बलाबलादिना निर्देश्यमिति ॥ ७ ॥ उक्तमेवार्थं स्पष्टयन् राजयोगम पि निर्दिशति आयस्थानेइति यस्य जन्मनि लाभस्थाने शुभदृष्टियोगवर्गाधिक्यं तस्य सदानल्पलाभः तथा तत्रैकोपिकोपिग्रहः

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

स्वषड्वर्गशुद्धः सर्वग्रहदृष्टश्चयज्जन्मतनोःस्यात् सजातोनृपः अन्यैरतिरस्कार्यो राजास्यादिति ॥ ८ ॥ इत्येकादशभावः ॥ ११ ॥ अथ व्ययभावफलं संकीर्त्तयंस्तावत्तत्पर्यायांस्तत्र निर्दिष्टव्यकालांगादिपदार्थांश्च स्पष्टयति पादद्वयेति व्ययाख्यं कालपुरुषस्य पादद्वयस्थानं वदंति निर्बंधस्य क्रियाविशेषस्य दानस्य उद्वहनस्य स्वीकारादिविशेषस्य व्ययादेः आदिपदेन यदर्थं व्ययस्तस्यापि

पादद्वयस्थानमिदंव्ययाख्यंनिर्बंधदानोद्वहनव्ययादेः ॥ जलाशयादेःसदसत्क्रियादेर्दण्डस्यहानिश्चविचार्य तात्र ॥१॥ यादृशागगनगाव्ययस्थितास्तादृशंव्ययमिहाचरत्ययम् ॥ उष्णगौव्ययगतेयदर्जितंयातिभूपस दनेहितद्धनम् ॥२॥ कुजेम्बुजेशेचधनेव्ययेवासस्त्रीग्रहेज्ञेत्रधनव्ययःस्यात् ॥ वेश्यानिषादैश्चसगीतनृत्यैःसा कौंत्वगौम्लेच्छविरोधिदुष्टैः ॥ ३ ॥

ग्रहःजलाशयादेरित्यादिना कुल्यादेर्ग्रहः सदसत्क्रियादेरित्यादिना फलस्य कृत्यादेश्चग्रहः स्पष्टमन्यत् ॥ १ ॥ व्ययस्य निषिद्धत्वा निषिद्धत्वे हेतुमाह यादृशाइति तत्र विशेषमाह उष्णगाविति तत्रादिसूर्यस्यसबलत्वनिर्बलत्वादिवशात्तद्व्ययस्यापि प्रीत्यप्रीत्यादि प्रयुक्तत्वंबोध्यम् ॥ २ ॥ धनव्ययादौ ग्रहप्रयुक्तविशेषमाह कुजेइति कुजेऽथवा अंबुजेशे सूर्येसस्त्रीग्रहैर्मन्दबुधशुक्राद्यैःसहितेलग्ना



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

व्यये धनेवा स्थितेसति अथवा बुधेसस्त्रीग्रहे तत्रस्थिते सति तत्र वेश्यानिषादादिषुव्ययः वस्तुतः कुजरव्योः सस्त्रीग्रहत्वे वेश्यादिषुव्ययः बुधस्य तथात्वेगीतनृत्त्यादिषु शनियुते राहौ धनेव्यये वास्थितेम्लेच्छविरोधिदुष्टैर्धनव्ययोवाच्य इति ॥ ३ ॥ व्ययस्थे कुजे विशेषमाह कुजेइति केवले कुजेव्यये सति क्षत्रियादितो धनव्ययः तथा कटचांदक्षवामपार्श्वयोः क्षतं शस्त्रादिघातचिह्नं तथा वामतनौ शरीरवामभागे दृशिचक्षुषि श्रुतौ कर्णेचरुजातयादक्कर्णयोः स्वकार्यासामर्थ्यं तथा तस्य स्त्रिया अधिकांगता तथा दुष्कृतितो

कुजे व्यये क्षत्रियवर्गतोव्ययः क्षतंचकटयामपिदक्षवामयोः ॥ दृशि श्रुतौ वामतनौ रुजास्त्रियोधिकांगता
दुष्कृतितोव्रणादिभीः ॥ ४ ॥ यमादिभिःसेंदुभिरंभसोव्ययोहुताशतोर्कारयुतैःपरस्त्रियाः ॥ सभार्गवैः
सेंदुसुतैश्चशत्रुतोश्मदार्वयःश्रृंग्यनिलादिबाधनम् ॥ ५ ॥

विकर्मभिर्व्रणादिरोगभीरपि॥४॥ पुनः सचंद्रशन्यादौ विशेषमाह यमादिभिरिति सचंद्रैःशन्यादिपापैः अंभसः जलनिमित्तकः जलसंबंधाद्वाव्ययः तथा कारयुतैस्तैः पापैः हुताशतः अग्निदाहादिनाग्निनिमित्तोवा सभार्गवैस्तैः परयोषित्सु सबुधैः शत्रुतःपाषाणादिप्रयुक्त बाधनं पीडाचेति ॥ ५ ॥

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

तत्र केवलानां पापानां केवलानांशुभानां वा सत्त्वे पृथक् पृथक् फलविशेषमाह पितृमात्रिति व्यये सूर्यशनिभौमाः केवलाः पापा श्चेत् तदा पित्रादीनां सर्वेषां क्षयः यदि केवलाः शुभा बुधगुरुशुक्राः तदा तस्य सहोदराः सुखिनो जीविताश्चवाच्याः तयोर्बालक स्य कन्यायाश्च यद्वा तयोः पितृमात्रोः सहोदराः पितृव्यादयः अत्राशुभाः सर्वथाऽशुभाः शुभास्तुशुभाएवेत्यर्थः ॥ ६ ॥ तत्र गुर्वो रन्यतमस्य प्रत्येकशुभाशुभयोगे फलविशेषानाह व्ययेइति धिषणे गुरौ व्ययस्थे सति पुरुषोन्नदाता सेंदुजे गुरौ तत्रस्थे कृषिक्रि

पितृमातृसहोदरक्षयोरविसौरिक्षितिजाव्ययेयदा ॥ यदिवित्सितसूरिसंगमःसुखिनः संतिसहोदरास्तयोः॥ ॥ ६ ॥ व्ययेन्नदाताधिषणोथसेन्दुजेकृषिक्रियाकृत्ससितेमखादिकृत् ॥ तडागवाप्यादिकृदिन्दुसंयुतेव्यये सशुक्रोहिरधिव्रणादिकृत् ॥ ७ ॥ क्षीणेंदूरविरथवाव्ययेथवाह्वौचेत्तस्याखिलधनसंहृतिर्नृपात्स्यात् ॥ दुः स्थारेपिफलमिदंव्ययेथवित्तंसतस्यात्सद्बुधसितजीवपूर्णचन्द्रैः ॥ ८ ॥

याकृत् तथा सति ते गुरौ मखादिकर्त्ता तथासचंद्रे गुरौव्ययगे तडागादिकर्त्ता पुनः सशुक्रे राहौ व्ययगेसति अधिकव्रणस्तत्प्रयुक्तो पदंशादिरोगश्च शरीरे भवतीत्यर्थः ॥ ७ ॥ पुनः पापविशेषयोगे फलविशेषः क्षीणेंदुरिति यदि क्षीणचंद्रो रविर्वा केवलः अथवा सूर्ययुक्तः क्षीणश्चंद्रो व्ययेचेत्स्यात् तदा राजकोपादिना तस्य पुरुषस्य सकलधनसंहृतिर्वाच्या परंतु ग्रहयोगादिप्रयुक्ततारतम्ये नैव एवं दुःस्थे भौमे शत्रुनीचादिगे मूढे दुर्बले [illegible] शुभयोगे फलांतरमप्यनुकूलयति अथ वित्तमिति

CC-0. Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

सद्बुधशुक्रजीवपूर्णचंद्रैस्तस्य वित्तमधिकं सत् शुभंचवाच्यं सद्बुधेत्यत्र सत्पदेन बुधस्य पापसंबंधे पापत्वेन सत्त्वोक्त्या पापसंबं
धाभावो बोध्य इति ॥ ८ ॥ पुनरुक्तमेवार्थं विशदयति व्ययगे इति असृजि भौमे व्ययगे बुधेन युक्ते दृष्टेपि वा सति धननाश एव
वाच्यः पुनरधिकारिगुरुर्व्यये केवलश्चेत् तदा पटुगोधनहेमसंपदः स्युः एवंभूते शुक्रेऽश्वः बुधे शोभनाभूमिरारामादिमतीति ॥ ९ ॥
पूर्णेइति पूर्णे चन्द्रे शुभैर्दृष्टे व्यये सति तस्यविपुलाः राजमंदिरादिवद्विशालागृहावाच्याः गृहाः पुंसितु भूम्न्येवेत्यभिधानात्

व्ययगेऽसृजिविद्युतेक्षितेधननाशोथगुरुर्व्ययेयदा ॥ पटुगोधनहेमसम्पदोभृगुजेऽश्वाविदिशोभनामही॥९॥
पूर्णेविधौव्ययगतेविपुलागृहाःस्युःस्वंसेवकेऽर्पयतिसज्ज्ञरवौसमस्तम् ॥ सेज्येसितेव्ययगतेसधनीसुकर्म्मासा
म्बे शिवे यदुपतौ च रतोनरःस्यात् ॥ १० ॥ सव्ययोभवतिकेंद्रगैःशुभैःपंचपूरुषशुभव्यवस्थया ॥ नारयो
थबालिभिःखलैर्व्ययेर्यापदोधिखलुसूतिपृच्छयोः ॥ ११ ॥ ॥ इतिव्ययभावविचारः ॥ १२ ॥

तत्रबुधे रवौ फलविशेषमाह स्वंसेवकेइति सबुधे रवौ व्ययस्थेसति समस्तं स्वकीयं धनं सेवके मोहादर्पयति गुरुशुक्रयोर्युक्तयो
र्व्ययस्थत्वे फलविशेषः सेज्येइति द्वयोर्गुरुशुक्रयोर्व्ययस्थयोः सतोर्जातो जनः धनवान् सुकर्मा यागादिबहुविधधर्मकर्मकर्त्ता
विशेषांतरमाह साम्बइति सशक्तिके भगवतिमहेश्वरे यदुपतौ श्रीवासुदेवे परमात्मनि च रतः भक्तिमानुभयत्रैवस्यात् ॥ १० ॥
निष्कृष्टार्थमाह सव्ययइति केंद्रगैः शुभैर्व्यये ग्रहाभावेपि पञ्चपुरुषशुभव्यवस्थया राजाज्ञादिनामहाजनैः स्वयमेववाक्कृतशुभसंके

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

तव्यवस्थया तस्य धनव्ययोवाच्यः ततस्तत्रतस्यारयः शत्रवोपि पराभवहान्यादिहेतवो न भवंति बलवत्सहायसंपन्नत्वादिति अथ बलिष्ठैः पापैरेवव्यये सद्भिः अर्यापदः शत्रुकृता विपत्तयः अधि अधिकं यथास्यात्तथा खलु निश्चयेन सूतौ जन्मनि प्रश्नेच ज्योतिर्विद्भिः सर्वं विचार्य शुभाशुभत्वादिना वक्तव्यफलं सर्वेषां ग्रहादीनां वक्तव्यमिति ॥ ११ ॥ इतिव्ययभावपरामर्शः ॥ १२ ॥ अथ द्वादशस्वेवभावेषु लग्नादि सकलभावसंबंधिद्रेष्काणानुरोधेन ग्रहयोगादिप्रयुक्तशुभाशुभचिह्नादिसाक्षात्कारादिना लोकानां शास्त्रे

ककण्ठवस्तिष्वजडाजगुस्तनौदृगंसगुह्येषुपुनर्व्ययस्वयोः ॥
खगैःश्रवोदोर्वृषणेषुसोदरायययोःखबन्ध्वोर्नसिपार्श्वसक्थिषु ॥ १ ॥

विश्वासं जनयन्नसांकर्येण तत्तद्द्रेष्काणानुसारेण शरीराकारविकारादिज्ञानंसंपादयति ककंठेतिद्वाभ्याम् इदमप्यत्रावगंतव्यं प्रथमतो द्वादशसु भावेषु षट्त्रिंशद्द्रेष्काणाभवंति प्रतिभावं द्रेष्काणत्रयस्य सत्त्वात् अत्रक्रमेण लग्नादौ प्रत्येकं द्रेष्काणत्रितयस्य प्रतिश्लोकपादंतत्फलनिरूपणं कृतमिति यद्यपि कंदृक्श्रोत्रनसाकपोलहनवोवक्त्रंचहोरादयस्तेकंठांसकबाहुपार्श्वहृदयक्रोडानिनाभिस्ततः ॥ वस्तिःशिश्नगुदेततश्चवृषणावूरूततो जानुनीजंघेंघ्रीत्युभयत्र वाममुदितैर्द्रेष्काणभागैस्त्रिधेत्याचार्यैरुक्तमेव द्रेष्काणफलं तथापि संकीर्ण



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

त्वाद्विविक्ततयास्पष्टंनप्रतिभाति अत्रतु विविक्ततयास्पष्टमेव प्रतीयते इतिविशेषः तथाहि प्रथमं प्रथमभावे लग्नद्रेष्काणत्रितये क्रमेण लग्ने प्रथमद्रेष्काणे कंशिरः तत्रशुभग्रहदृग्योगादौ शुभंतिलमशकादिरूपंचिह्नंवाच्यम् अशुभग्रहदृग्योगादौ तु विकृतिंव्रणादिकं तत्र वदेत् एवं द्वितीये द्रेष्काणे कण्ठे गलादिप्रदेशावच्छिन्ने तथा तृतीये द्रेष्काणे वस्तौ वस्तिनाभेरधोद्धइत्युक्तेः शरीरावयवे अजडाः पंडिताः नतुतदाभासाः तनौ शरीरे कंठाद्यवयवेषुतत्तद्रेष्काणप्रयुक्तंफलंजगुः तथाव्ययस्वयोः द्वादशद्वितीयभावयोस्तत्तद्रेष्का णेषुग्रहयोगादौ दृगंसगुह्येषु पूर्ववच्चिह्नादिनिर्देश्यं तथाहि व्ययभावस्य प्रथमद्रेष्काणे सदसद्योगादौ वामचक्षुषि सदसत्फलं द्वितीय भावस्य प्रथमद्रेष्काणे दक्षिणे चक्षुषि वाच्यमित्यर्थः एवं व्ययस्वयोर्द्वितीयद्रेष्काणयोः क्रमाद्वामदक्षिणांसयोः एवं तयोर्व्ययस्वयोरे वव्ययतृतीयद्रेष्काणेशिश्ने द्वितीयस्य तृतीयेगुदे वाच्यं पुनः सोदराययोस्तृतीयलाभयोः अत्रान्वयस्तुव्युत्क्रमेण अन्यथाक्रमभंगा पत्तिः यदिपदभंगाद्यपेक्षया क्रमभंगस्य गुरुदोषत्वात् तथाच लाभसोदरयोरित्यर्थः वस्तुतः पाठोपिलाभसोत्थयोरित्येवयुक्तः सोत्थः सोदरः तृतीयइत्यर्थः तथाचैकादशभावस्याद्यद्रेष्काणे वामेश्रवसि कर्णे तृतीयस्याद्ये दक्षिणकर्णे पुनरेकादशद्वितीयेवाम भुजे तृतीयद्वितीये दक्षिणभुजे पुनरेकादशतृतीयेवामेवृषणे तृतीयतृतीये दक्षिणवृषणे ततः खबन्ध्वोर्दशमचतुर्थयोः दशमस्याद्येवामा यां नसि चतुर्थस्याद्ये दक्षिणनासिकायाम् अत्रपद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छसप्रभृतिष्वितिनासिकाशब्द स्य नसादेशेसप्तम्येकवचने नसीतिसाधुः तथातयोर्द्वितीयद्रेष्काणयोः क्रमाद्वामदक्षिणपार्श्वयोः एवं तयोस्तृतीयद्रेष्काणयोः वाम

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

दक्षिणसक्थिनोः सक्थिशब्देन ऊरुः कथ्यते जानूपरिभागः सएव सक्थिक्लीबेपुमानूरुरित्यमरः ॥ १ ॥ कपोलेति सूनुभाग्ययोरत्रा
पिभाग्यपुत्रयोरितिपाठोयुक्तः तथाचनवमपंचमाद्ययोरुर्यंशयोर्वामदक्षिणयोः कपोलयोः क्रमात् एवंतद्द्वितीययोर्वामदक्षहृदयभा
गयोः एवं तत्तृतीययोर्वामदक्षजानुनोः अरीभयोरित्यत्रापिइभांगयोरितिपाठः क्रमभंगभयात् तथाचाष्टमषष्ठयोराद्ययोर्वामदक्ष
हन्वोः चिबुकाधोहनुर्हनूरितिरभसप्रामाण्यादूकारांतोपिहनूशब्दः द्वितीययोः वामदक्षभुजांतःप्रदेशयोः क्रोडयोरित्यर्थः ननाक्रो

कपोलहृज्जानुषुसूनुभाग्ययोर्हनूभुजान्तःप्रसृतास्वरीभयोः ॥ मदेदृकाणैस्त्रिभिरास्यनाभिपत्सुसद्भिरङ्कंवि
कृतिंखलैःक्रमात ॥ २ ॥ निजाग्रजातात्मजघासिरामकृतेहिसङ्केतनिधौकृतेस्मिन् ॥ ज्योतिर्विदा रामद
यालुनाम्नार्कभावसङ्केतइतःसमाप्तिम् ॥ ३ ॥ इतिसांगभावाःचतुर्थःसंकेतश्च ॥ ४ ॥

डभुजांतरमितिकोशात् तृतीययोः वामदक्षप्रसृतयोःजंघातुप्रसृतेत्यमरः मदे सप्तमभावे प्रथमेद्रेष्काणे आस्येमुखे द्वितीये
नाभौ तृतीये पत्सु पादेषु पत्सुइतिबहुत्वं व्यत्तयभिप्रायं नानाकारजीवबहुत्वाभिप्रायं वा तत्रतत्रसद्ग्रहयोगदृष्ट्याद़ौ अंकं शुभलक्षणं
चिह्नं पापैर्विकृतिंचजगुरितिपूर्वेणान्वयः ॥ २ ॥ निजाग्रजातेतिस्पष्टार्थः प्राग्व्याख्यातश्च द्वादशभावफलसूचकसंकेतसमाप्ति
द्योतकःश्लोकः ॥ ३ ॥ चतुर्थसंकेतव्याख्या च समाप्ता ॥ ४ ॥



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

अथाद्भुतानुभूताव्यभिचारिस्पष्टसकलपुरुषाभिलषितफलप्रतिपत्त्यर्थं संकेतकौमुद्यादिप्राचीनशास्त्रसंमतसदसत्कलज्ञानोपयोगिसूर्या दिग्रहसंबंधिशयनादिद्वादशावस्था दर्शयति सार्द्धार्यया शयनमिति शयनाद्या द्वादशावस्था लोकानामिष्टानिष्टज्ञानोप योगिन्यउक्ताइति ॥ १ ॥ अथाभीष्टसमये तत्तदवस्थाज्ञानाय तत्साधनप्रक्रियामाह यदिति यस्मिन् यस्मिन् उडुनि नक्षत्रे जन्मनि जन्मसमये सूर्यादिषु नवसु ग्रहेषु मध्ये प्रत्येकं ग्रहोस्ति अयमर्थः इष्टकालेयस्य ग्रहस्यावस्थाज्ञानमभिलषितं तत्तद्ग्रह

शयनमुपवेशनंनेत्रपाणिरस्मात्प्रकाशगमनेस्तः ॥ अगमनमास्थानीचागमोभुजिनृत्यलिप्साच ॥ १ ॥
कौतुकमथनिद्राख्यावस्थाद्वादशमिताग्रहाणांस्युः॥यदुडुनिजन्मनिखचरस्तदुडुखचरसंख्ययोर्निहतिः॥२॥
ग्रहलवसंख्यागुणिताजन्मर्क्षनिजेष्टलग्नमानयुता ॥ रवितष्टाशयनाद्याजन्तुषिखगानामवस्थाःस्युः ॥ ३ ॥

स्य सूर्यादिक्रमेणैकद्वित्र्यादिनवांतासंख्या तथा तत्तद्ग्रहाधिष्ठितनक्षत्रस्यचाश्विन्यादिक्रमेण सप्तविंशत्यंता संख्या पृथक् पृथ क् स्थाप्या पुनस्तद्ग्रहसंख्यातन्नक्षत्रसंख्ययोरन्योन्यं निहतिः कार्या ॥ २ ॥ पुनः किंकर्तव्यमित्याकांक्षायामाह ग्रहलवेति ग्रह नक्षत्रसंख्ययोर्निहतिः पुनस्तत्तद्ग्रहांशसंख्ययागुणिता कार्या एवं स्वस्वग्रहनक्षत्रांशसंख्यानां परस्परं घाते सिद्धा यांकसंख्या सा पुनर्जन्मर्क्षनिजेष्टलग्नमानयुता कर्त्तव्या ऋक्षं च निजेष्टंच लग्नंच तानि ऋक्षनिजेष्टलग्नानि पुनर्जन्मपदेन तत्पुरुषः ततोमानपदे

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

न जन्मर्क्षनिजेष्टलग्नपदस्य तत्पुरुषः तेन जन्मनक्षत्रमानं घटचात्मकं निजेष्टमानं मेषादि जन्मलग्नमानमिति भिन्नं भिन्नं सिद्धम् एव मेतैर्मानैर्युक्ता सा संख्या अत्र निजेष्टमित्यत्रेष्टपदेनैवार्थसिद्धौ पुनर्निजपदेन सूर्योदयादहोरात्रगताः षष्टिपर्यंता घटयएव ग्राह्या न तु तदवयवपलान्यपीति सूचितं ततः संपन्ना सर्वा संख्या रवितष्टा रविभिस्तनूकृता तत्रावशिष्टांकसंख्या तत्तद्ग्रहतत्तदवस्था संख्या भवति एवं जनुषि जन्मकाले सर्वेषां ग्रहाणां शयनाद्याअवस्थाः स्युः सिद्ध्यंतीत्यर्थः ॥ ३ ॥ अथैषां दृष्ट्याद्यवस्थात्रयानय नायोपायमाह दृष्ट्यादीति या पूर्वप्रकारेण सिद्धा शयनाद्यवस्था तत्संख्यात्रग्राह्या अवस्थायाः स्वरूपतः कृतीकरणस्यासंभव

दृष्ट्याद्यवस्थाशयनाद्यवस्थायापूर्वसिद्धात्रकृतीकृतासा ॥
स्वनामवर्णात्सहितार्कतष्टास्वक्षेपयुक्तागुणशेषितास्यात् ॥ ४ ॥

दुक्तिकत्वात् सा कृतीकृता वर्गीकृता समद्विघातः कृतिरुच्यते इत्युक्तेः स्वेनगुणनीया सा संख्येत्यर्थः सा पुनः स्वनामवर्णात्सहि ता प्रसिद्धनामप्रथमवर्णस्वरसंख्यया युक्ता कार्या वर्णस्वरास्तु पंचाणेङः स्वराः कच्छडधभवमुखेष्वङ्णञव्यंजनेष्वित्युक्ताः अत्र वर्णस्वरसंख्योपादानाय प्रसिद्धनामैव ग्राह्यं स्वरशास्त्रे प्रसिद्धनाम्न एव प्राधान्यात् प्रसुप्तो येन जागर्तियेनागच्छति शब्दित इत्यु क्तेः ततः सा सर्वपूर्वसंस्कारविशिष्टा अर्कतष्टा द्वादशाधिक्ये ततः कृशीकृतेत्यर्थः पुनः स्वक्षेपयुक्ता यस्यग्रहस्य दृष्ट्याद्यवस्था त्रयजिज्ञासा तस्य ग्रहस्य वक्ष्यमाणक्षेपांकयुक्ता पुनर्गुणैः शेषिता तष्टा तत्र शेषे दृष्ट्याद्यवस्थास्यात् तत्रैकशेषे दृष्ट्यवस्थावि



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri.

शेषे चेष्टाविशेषे विचेष्टेति ॥ ४ ॥ तत्रापेक्षितान् क्षेपकांकान् दर्शयति रव्यादीनामिति क्रमात् सूर्यादीनां नवानां शरादयः सू० ५ चं० २ मं० २ बु० ३ बृ० ५ शु० ३ श० ३ रा० ४ के० ४ क्षेपकांकाः स्युः पूर्वं सूचितास्तिस्रो वस्था नामतो निर्दिशति दृष्टीति यदर्थमिष्टानिष्टपरिपाकज्ञापकानामवस्थानां साधनप्रक्रियानिर्दिष्टातत्सफलयति स्थाने त्यादि स्थानं लग्नादयो भावाः मेषादिराशयश्च अवस्थाशयनाद्या द्वादशशक्तिर्दृष्ट्याद्यवस्थारूपा ग्रहदृष्टियोगादिरूपाच तद्योगात् सर्वेषां स्थानशयनादीनां समवायात् फलं स्यात् एष्वेकस्याप्यज्ञाने फलस्य निर्देष्टुमशक्यत्वात् अत्रोदाहरणं

रव्यादीनांक्षेपकांकाःशरद्विद्वित्रीष्वग्न्यग्न्यब्धिवेदाःक्रमात्स्युः ॥
तिस्रोवस्थादृष्टिचेष्टाविचेष्टास्थानावस्थाशक्तियोगात्फलंस्यात् ॥ ५ ॥

सं. १९४६ तत्राषाढशुक्लद्वितीयायां रवौ पुष्यभे सिंहलग्ने जन्म तत्रेष्टं १० जन्मसमये सूर्य आर्द्रायां चन्द्रः पुष्ये भौम आर्द्रायां बुधो मृगशिरसि गुरुर्मूलभे शुक्रः कृत्तिकायां शनिराश्लेषायां राहुरार्द्रायां केतुः पूर्वाषाढभे सूर्यस्यांशाः १६ चं. १३ भौ. १२ बु. २७ गु. १२ शु. १ श. २७ रा. २० के. २० तत्र रविसंख्या १ तन्नक्षत्रसंख्या ६ तयोर्निहतिः ६ पुनरंशसंख्यया १६ गुणिता ९६ साजन्मर्क्ष ८ निजेष्ट १० लग्न ५ मानैर्युता ११९ रवितष्टा ११ शेषं जाता कौतुकावस्थारवेः एवमन्येषामवस्थाः साध्याः ततोदृष्ट्याद्यवस्थानयनं कौतुकावस्थासंख्या ११ कृतीकृता १२१ वर्णस्वरसंख्या ४ युक्ता १२५ अर्कतष्टा ५ स्वक्षेपः ५ युता १०

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

पुनर्गुणाधिकत्वात्तत्तष्टा १ जातादृष्टचवस्था एवमन्यत्र ॥ ५ ॥ अथ प्रतिश्लोकपादं प्रत्यवस्थाफलं रवाविति तत्र जनाविति पदस्य यथासंभवं सर्वावस्थाफलेष्वन्वयः शेषं स्पष्टम् ॥ ६ ॥ रवौगमनगे इति अभद्रकोपद्रुतः अभद्रःकोपद्रुतश्च यद्वाऽभद्रैः कोपेनद्रुतः

रवौशयनगेगुदेव्रणसुरोव्यथापित्तभीर्धनार्त्तिरुपवेशनेमनसिदुष्टतावैरिता ॥ जनौनयनपाणिगेबहुसुखंनृपा त्स्वाप्तयः प्रकाशगउदारताशुभसभाप्रतिष्ठासुखम् ॥ ६ ॥ रवौगमनगेलसोशुचिरभद्रकोपद्रुतोऽन्यदारनिर तोऽगमेगमरुचिःखलोनिंदितः ॥ सभागउपकारकृत्क्षितिगुणप्रतिष्ठायुतःकृशोरिविजितःखलश्चलमतिमंदा दागमे ॥ ७ ॥ रवौभुजिगतेव्यथाकुमतिदुःखितार्थक्षयाः सुखं सुजनमण्डनंसदसि नृत्यलिप्सागते ॥ तथा सुखजितारितानृपतिमान्यताकौतुकेविदारवसुवासतात्पलसताचनिद्रागते ॥ ८ ॥ इतिरवेः ॥ इंदौजनौशय नगेतिजडोगतार्थस्तत्रोपवेशनगतेविधिनोऽपहर्त्ता ॥ रोगीशठःकठिनवागपिनेत्रपाणौभूपप्रियोगुणगणैःसु खितःप्रकाशे ॥ ९ ॥

स्थानाद्भ्रष्टः यद्वाऽभद्रकैः कामादिभिर्नरैर्वा उपद्रुतश्च स्पष्टमन्यत् ॥ ७ ॥ रवौ भुजिगत इति सुखेन जिता अरयो येन विदारवसुवा सता दारवसुवासराहित्यम् ॥ ८ ॥ इतिरवेः॥ अथ चंद्रस्य इंदाविति अपहर्त्ताचौरः कठिनवाक् सकलपुरुषोद्वेगकारिवचनः ॥ ९ ॥ 

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

पक्षेसितेपीति सर्वास्ववस्थासु शुभः सितेब्ज इतिवक्ष्यमाणरीत्याचंद्रस्य शुक्लपक्षेऽवस्थामात्रे निंद्यफलकत्वाभावेपि गमनागमन
योर्मध्यमत्वं सूचितं तेन तत्र चंद्रस्य कृष्णे कृशत्वेनातिनिंद्यत्वमप्यर्थसिद्धं शुक्लागमे शुक्लेपक्षे आगमे आगमावस्थायां शुभः
अन्यदले कृष्णपक्षे रुजार्तो नरःस्यात् ॥ १० चंद्रे भुजाविति अत्रापि शुक्ले शुभं कृष्णेत्वशुभम् एवं नृत्यलिप्सायामपि ज्ञेय

पक्षेसितेपिगमनेनयनेरुजास्यात्पादामयीत्वगमनेद्यकरोतिदीनः ॥संसद्गतेन्नृपनिभोवनिताविलासीशुक्लाग
मेशुभकृदन्यदलेरुजार्तः ॥ १० ॥ चंद्रेभुजौविविधसौख्यमसत्तुकृष्णेनृत्येप्सितेसरसगीतिरतोनकृष्णे ॥
स्यात्कौतुकेधनिन्नृपश्चतुरोतिभोगीनिद्रागतेमहिततासगुरौनसागौ ॥ ११ ॥ इतिचंद्रस्य ॥ भौमेजनौशय
नगेतु सदद्रुकण्डूःपापीधनीविकृतिमानुपवेशनेस्यात् ॥ लग्नान्यगेनगरपोमृजिनेत्रपाणौपुत्रान्यगेगुरुयुते
नृपतिःप्रकाशे ॥ १२ ॥

मित्याह नृत्येप्सिते इति महितता पूज्यता परंतु सगुरावेव चंद्रे सराहौ तु न पूज्यता अत्र शुक्लकृष्णयोरविशेषः ॥ ११ ॥ इति
चंद्रस्य अथ भौमस्य भौमेइति लग्नान्यगेऽसृजि भौमे नेत्रपाणौ शुभम् एवं पुत्रान्यगे इत्यत्रापि शेषं स्पष्टम् ॥ १२ ॥

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

भौमेगमइति कोणव्ययगे भौमे स्वभावस्थायां सुखाभावोऽन्यत्र सुखमित्यर्थः स्पष्टमन्यत् ॥ १३ ॥ पुष्ट आरेइति दुष्कृती अंहोदुरि
तदुष्कृतमिति कोशात् दुष्कृतवान् पापीत्यर्थः तुंगादन्यत्र कौतुके न मित्रादिभागित्यर्थः शेषं स्पष्टम् ॥ १४ ॥ इतिभौमस्य अथ
बुधस्य ज्ञखंजइति खंजः विकृतपादः गतिविकल इत्यर्थः असृग्दृक् रक्तनेत्रः लग्न्यान्यगेशयने बुधे शठो धूर्त्तो भवति लग्ने बुधे

भौमेगमेकलहकष्टभियःस्वहानिःप्रीतिःसुखत्वगमनेरिजयःश्रमाद्यैः ॥ कोणव्ययान्यगृहइष्टसुखंसभायां
स्यादागमेकुमतिकर्मकृदामयीच ॥१३॥ पुष्टआरेभुजौमिष्टसुग्दुष्कृतीनृत्यलिप्सागतेसर्वथासौख्यभाक् ॥
कौतुकेतुंगगेमित्रपुत्रार्थभाङ्निद्रितेदुर्गतःक्रुद्धआर्त्तोऽशुचिः ॥१४॥ इतिभौमस्य ॥ ज्ञखञ्जोजननेतनौशयन
गेऽसृग्दृक्शठोऽङ्गान्यगेमित्रोच्चेप्युपवेशनेङ्गउदयीदीनःखलाढ्येक्षिते ॥ लोलोमान्यमतिःसुतेसुतसुखोनो
नेत्रपाणौप्रभुर्विद्यावान्खलहाद्यालुरमलःश्रेयान्प्रकाशेबुधे ॥ १५ ॥ गमनेसुखंनृपगमागमतोप्यगमेरमा
ललितवासविधिः ॥ प्रभुतोच्चगेसदसिसर्वसुखंयुगसन्ततिर्वितितिरागमगे ॥ १६ ॥

तु न शठः उपवेशनावस्थायां बुधे लग्ने मित्रोच्चादियोगे पुरुष उदयी भाग्यवान् खलैर्दृष्टयुक्ते बुधे तु लग्ने दीन एव सुतस्थे नेत्रपाण्य
वस्थायां बुधे लोलश्चंचलः मान्यमतिः प्रशस्यप्रज्ञः पुत्रसुखहीनश्च स्पष्टमन्यत् ॥ १५ ॥ गमने इति आगमावस्थायां बुधे युगसंततिः



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

तस्य वनितायुगलं प्रसूते विततिः प्रख्यातिः ॥ १६ ॥ वादइति पुण्ये नवमे अंगे लग्नेच बुधे कौतुकावस्थायां शुभफलं बुधे अष्टमदगे सप्तमाष्टमगे कौतुके एव पुरुषो वेश्यासक्तचित्तः तेन धनधर्मादिहानिः स्पष्टमन्यत् ॥ १७ ॥ इतिबुधस्य ॥ अथ गुरोः ॥ जी

वादोऽनर्थमतिर्बुधेसुजिगतेकार्श्यंभयंभूपतेर्वैश्याप्रीतिरनल्पसौख्यमधिकाश्रीनृत्यलिप्सागते॥ पुण्येऽङ्गे च
शुभंबुधेष्टमदगेवेश्यारतिःकौतुकेनिद्रायांव्यसनंक्षुधार्तिरसुखंवैरंनिजैर्हानयः ॥ १७ ॥ इतिबुधस्य ॥ अ
थगुरोः ॥ जीवेजन्मनिनिर्बलःशयनगेगौरोरिभीतोभवेद्वाचालोप्युपवेशनेऽभिमतिमान्भूपारितप्तोव्रणी ॥
रोगीश्रीविधुरोऽतिनिन्दितरतःस्यान्नेत्रपाणौस्मरीतेजस्वीहरिवल्लभोबहुधनःश्रीमान्प्रकाशेगुरौ ॥ १८ ॥
जीवेस्याद्गमनेनरोबहुसुहृद्विद्यात्मजार्थान्वितोलोकख्यातगुणोभवेदगमनेलक्ष्म्यायुतोनन्तया ॥ पाण्डित्ये
गुरुरुन्मनाश्चजननेसंसङ्गतेऽर्थान्वितोमानीचागमगेगुरौनृपसमोबन्ध्वर्थिभृत्यैःसुखी ॥ १९ ॥

वे जन्मनीति गौरवर्णः अरिभीतः सदा शत्रुभययुतः अभिमतिमान् मिथ्यास्वोत्कर्षज्ञानप्रयुक्तान्यपुरुषतिरस्करणशीलत्वंमत्व न्तार्थः स्मरी सदाकामसंतप्तहृदयतया विषयासक्तः ॥ १८ ॥ जीवेस्यादिति पाण्डित्येगुरुर्बृहस्पतिः उन्मनाः उत्कंठावान् धैर्यस



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

सं॰नि॰

॥६५॥

द्रुणादिष्वित्यर्थः स्पष्टमन्यत् ॥ १९ ॥ गुरोरस्यादिति भुजौ मिष्टभोजी बंधुभिर्युक्तश्च कुधीर्दुष्टबुद्धिः विपुण्यः पुण्यकर्मरहितः ॥२०॥
इति जीवस्य अथ भृगोः दंतरोगीति क्रुधाऽसन् निंदनीयत्वेनानादृतइत्यर्थः खाद्यरीति दशमसप्तमषष्ठगे शुक्रे नेत्रपाण्यवस्थायां
पुरुषोऽस्वेक्षणः स्यात् स्वेक्षणाभ्यां स्वचक्षुर्भ्यां बुद्ध्यादिना वा रहितः परदृष्टिबुद्ध्यादिनैव स्वव्यवहारनिर्वाहकर्त्ता ॥ २१ ॥

गुरोरस्याद्भुजौमिष्टभुग्बन्धुशालीधनीनृत्यलिप्सागतेतत्त्वबोधी ॥ कृपालुर्धुनीकौतुकेबन्धुपूज्यःकुधीर्नि
द्रितेस्याद्दरिद्रोविपुण्यः ॥ २० ॥ इतिजीवस्य ॥ दन्तरोगीक्रुधासन्शयानेसितेराजमान्यःसुखीचोपवेशे
रिहा ॥ खाद्र्यरिष्वक्षिपाणौसितेऽस्वेक्षणःस्वोच्चमित्रर्क्षगेस्यात्प्रकाशेप्रभुः ॥ २१ ॥ जनौगमेमातुरसंस्थिते
गदीधनीसुखोत्साहयुतोगमेचलः ॥ सभागतेराजसमोऽरिहागुणीविपुत्रदारोऽर्थवियुग्रुजागमे ॥ २२ ॥
क्षुधारिरुग्भीर्भुजिगेधनंस्त्रियाधनंमतिःश्रीर्युजिनृत्यलिप्सया ॥ महत्त्वलक्ष्म्यादरभाक्चकौतुकेविनिंदि
तोनिद्रितएडमूककः ॥ २३ ॥

जनौगमे इति मातुरसन् जन्मत एव जननीप्रतिकूलाचरणपरः अगमे अगमनावस्थायामचलः स्थिरबुद्धिः सभेति आगमे
आगमावस्थायां रुजा रोगादिना अर्थवियुक् पुरुषोर्थरहितः ॥ २२ ॥ क्षुधेति भुजिगे शुक्रे क्षुधारिरुजां त्रयाणामेव भीर्वाच्या
स्त्रियाः सकाशाद्धनमपि प्राप्नोतीति शेषः नृत्यलिप्सयाऽवस्थया युजि युते धनं मतिः श्रीश्च भवंतीति निद्रिते निद्रावस्थां

सटी॰

सं॰ ५

॥६५॥

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

गते शुक्रेएडमूककः एडमूकस्तुवक्तुं श्रोतुमशिक्षितइति कोशात् मूढो विपरीतकारीचेत्यर्थः ॥२३॥ इति शुक्रस्य ॥ अथशनेः ॥ क्षुत्तृ
ड्भ्यामिति शनौशयनगेसति आद्यावस्थायां पुरुषो रोगी वाच्यः अंत्ये उत्तरायुषि सुखीच उपवेशनावस्थायां शनौ अभिमानी का
रानृपाभ्यामार्त्तः कारागारे बहुकालबंधनमनुभवति नृपेण हृतधनश्चेत्यर्थः स्पष्टमन्यत् ॥ २४ ॥ गमेइति कांतिधनादिसंमदः

इतिशुक्रस्य ॥ क्षुत्तृड्भ्यांश्रमयुक्शनौशयनगेरोग्यादिमेंत्येसुखीस्याज्जन्मन्युपवेशनेऽभिमतिमान्कारा
नृपार्त्तःक्षयी ॥ राजश्रीर्बहुतोषकृद्बहुकलाज्ञोनेत्रपाणौशनौभक्तस्साम्बशिवेगुणीमतिदयायोगीप्रकाशेसु
खी ॥ २४ ॥ गमेशनौबन्धुसुखस्वयुक्प्रसुर्गदीसुताद्यैर्वियुतोऽगमेभ्रमेत ॥ सभाङ्गतेकान्तिधनादिसम्मदो
गदीजडोल्पश्च्युतभोगआगमे ॥ २५ ॥ स्याद्भुजौसद्रसैर्भोजनंनेत्ररुङ्नृत्यलिप्सागतेवित्तयुग्धार्मिकः ॥
कौतुकेकामिनीलास्यसौख्यान्वितोनिद्रितेचारुशोभीरसज्ञःसुखी ॥ २६ ॥

कान्त्या धनप्रतिष्ठादिना च संमदः प्रमोदो यस्य प्रमोदामोदसंमद इति कोशात् अल्पस्तुच्छः कृशोवा च्युतभोगः नष्टभोग इत्य
र्थः ॥ २५ ॥ स्याद्भुजाविति कामिनीनां लास्येन मनोहरनृत्यादिना प्रयुक्तं सौख्यं तेन युक्तः लास्यं नृत्यं च नर्त्तने इत्यमरः चारु

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

शोभी लोकोत्तरबहुविधशोभाशाली रसज्ञः नानाविषयरसास्वादनशील इति ॥ २६ ॥ इतिशनेः ॥ अथराहोः ॥ गोयुग्मेति वृषमिथुन मेषकन्याराशिगते राहौ शयनावस्थायां पुरुषोजात आढ्यो धनीस्यात अन्यगे उक्तराशिचतुष्टयादन्यराशिगते कन्याव्यतिरिक्त कर्कादिमीनांतराशिगे राहौ त्वार्त्तः पीडितो वाच्यः उपवेशनावस्थायां राहौ जातोऽधनः धनरहितः तथा नृपमतोपि राजभिराद्दतो

इतिशनेः ॥ गोयुग्माजसुतागतेशयनगेगावाढ्यआर्तोन्यगेस्याज्जन्मन्युपवेशनेन्नृपमतोप्यूनोऽधनोदद्भुमा
न् ॥ चौरव्यालशठारिभीधनहृतीरुङ्नेत्रपाणौदृशोःख्यातोऽभूपसमोगुणीबहुधनःश्यामःप्रकाशेकृती ॥
॥ २७ ॥गमेसुखीज्ञःसुतवान्नृपार्चितःस्मरीगदीक्रोधयुतोऽगमेशठः॥ सदस्यगोज्ञःकृपणागुणीधनीस्वबंधुवा
दोऽरिभिरागमेच्युतिः॥ २८ ॥ मन्दश्रीर्भुजिगेस्वबन्धुविधुरोऽगौभीरुरार्त्तःक्षुधाद्दृग्दुःखीरिपुभीगदीविकृत
धीःस्यान्नृत्यालिप्सागते ॥ अन्यस्त्रीनिरतःपुनःपरधनस्तेयीजनौकौतुकेनिद्रायांशुभदारधीसुतधनःकेता
वपीत्थंवदेत् ॥ २९ ॥ ॥इतिराहुकेत्वोः ॥

पि ऊनः अलब्धमनोरथः धनप्रतिष्ठासुखादिरहितो लिप्सासहित एवस्यात नेत्रपाणौ राहौ सति चौरादिभिः दृशोर्नेत्रयोरुक्रोगः श्यामःश्यामवर्ण इति ॥ २७ ॥ गमेइति सदसि सभावस्थायां राहौ पुरुषो ज्ञः पंडितः कृपणश्चेति अगमे राहौ अरिभिश्च्यु तिरुत्कृष्टपदादिति ॥ २८ ॥ मन्दश्रीरिति भुजिगे भोजनावस्थायां राहौ नरः स्वबंधुभिर्विरहितः क्षुधा आर्त्तः दृग्दुःखी ॥६६॥

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

नेत्रपीडयुक्तरिपुभीगदाभ्यांसहितः यद्वा रिपुभीतिप्रयुक्तरोगवान् अन्यस्त्रीनिरतः व्यभिचारकर्ता शेषंस्पष्टं केतावपीत्थंवदेदि त्यस्यायमर्थः गोयुग्मेत्यादिराशिचतुष्टयं यद्राहोः शुभफलदमुक्तं तत्र तथा धनुर्मीनराशीकेतोरपि शुभफलदाववगंतव्यौ शेषं सर्वमुभयोः समानफलमिति सिद्धम् ॥ २९ ॥ इति राहुकेत्वोरपि द्वादशावस्थाफलम् ॥ उक्तमर्थं संक्षिप्य दर्शयति प्रतिश्लोकपादमिति मया प्रत्यवस्थाफलं सूर्यादिग्रहाणां प्रत्येकं यत् शयनाद्यवस्थाफलं तत् प्रतिश्लोकपादं एकैकस्मिन् श्लोकपादे श्लोकचतुर्थांशे पूर्वशास्त्रानुसारात् पूर्वेषां शास्त्रं गर्गादिपरंपरासिद्धमनुसृत्यैवनिबद्धं न स्वकपोलकल्पितं किंतु पूर्वसं

प्रतिश्लोकपादंमयाप्रत्यवस्थाफलंपूर्वशास्त्रानुसारान्निबद्धम् ॥

अतःसङ्करोनग्रहाणांफलेस्यात्फलंस्थानदृष्ट्यादियोगाल्लिखामि ॥ ३० ॥

केतानुभवाभ्यांसिद्धमेव अतएव मया निबद्धं नानाविधवृत्तकल्पनया ग्रथितं नतु कल्पितमित्यर्थः प्रतिश्लोकपादं प्रत्यवस्था फलनिबंधनस्य प्रयोजनाकांक्षायामाह अतइति अतएतन्निबंधदर्शनात् ग्रहाणां फलनिर्देशावसरे ज्योतिर्विदां संकरो भ्रमो न भवेत् अन्यथा एतत्फलमस्यवास्यवेति प्रतिपत्त्यनुपपत्तिः अधुना पूर्वोक्तशुभाशुभाद्युपकारकस्थानदृष्ट्यादियोगप्रयुक्तंफलं लिखामि नि बध्नामि संकेतशेषेणेत्यर्थः तत्रस्थानं लग्नादिभावा राशयश्च । दृष्टिःसदसद्ग्रहकर्तृकपादार्द्धपूर्णदर्शनादिरूपा आदिपदात्तत्तद्ग्रहयोगा दितइति स्थानादीनां सर्वेषां संबंधेसति शुभाधिक्ये शुभमशुभाधिक्येऽशुभमितिवक्तुं विद्वान् समर्थः स्यात् अत्रदृष्टिपदेनदृष्ट्याद्यव

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

स्थात्रितयमपिग्राह्यं तदुक्तं संकेतकौमुद्यां दृष्टौ स्वल्पं फलं ज्ञेयं चेष्टायां विपुलंफलम् ॥ विचेष्टायां फलं न स्यादेवं दृष्टिफलं विदु रिति ॥ ३० ॥ यत्प्रतिज्ञातं तद्दर्शयति व्योम्नीति यदि रविः सूर्यो व्योम्नि दशमे त्रिकोणे नवमपंचमयोः स्मरे सप्तमेच स्थाने तिष्ठन् नेत्रपाण्यवस्थायां वर्त्तमानःस्यात्तदानराणामिष्टफलप्रदाता ज्ञेयः यदा जनौ जन्मनि प्रकाशावस्थायां व्ययदारमानस्थितस्तदास दारात्मजनाशकर्त्ता सदारस्यात्मजस्य दारात्मजानां वा नाशकः अत्र मानपदस्थाने पुत्रपदं युक्तं सप्तमे पंचमेवापि प्रकाशे च यदा

व्योम्नित्रिकोणेयदिनेत्रपाणौरविःस्मरेपीष्टफलप्रदाता ॥ जनौप्रकाशेव्ययदारमानस्थितःसदारात्मजना शकर्त्ता ॥ ३१ ॥ पुण्येभुजौपुण्यहरोरविःस्याच्चेत्कौतुकेशत्रुगतोरिहंता ॥ पुत्रांगनार्त्यैसुतदारगोर्कःसर्वा स्ववस्थासुशुभःसितेब्जः ॥ ३२ ॥

रविःनाशयेत्प्रथमापत्यं कलत्रंच विशेषतइति प्राचीनोक्तेः ॥ ३१ ॥ पुण्येइति पुण्येनवमे भुजौ भोजनावस्थायां स्थितः सूर्यः पुण्यहरो ज्ञेयः नवमस्थो यदा सूर्यो भोजने च विशेषतः ॥ तदापुण्येमहाविघ्नमितिवचनात् एवंकौतुके षष्ठगतो रविः शत्रुनाशकः एवंसुतसप्तमा न्यतरगः सूर्यः पुत्रांगनार्त्यै स्यात् चंद्रेविशेषमाह सर्वास्विति सिते शुक्लपक्षे अब्जः चन्द्रः सर्वास्वप्यवस्थासु शुभएव नतु कृष्णे तत्राव

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

स्थानुसारेण फलप्रदत्वस्य तस्योक्तत्वात् ॥ ३२ ॥ शयनेइति असृजि भौमे दारपुत्रगे शयनेसति तस्यससुतस्त्रीनाशो वाच्यः पुनः शयाने शत्रुगेसति प्रथमस्त्रिया असुखं तस्याः सुखाभावस्तत्प्रयुक्तस्वसुखाभावो वा अर्थादन्यस्याः सुखं योगांतरं अरीक्षितेइति शयानएव भौमे शत्रुदृष्टे शनिराहुयुते सति तस्य शिरोर्त्तयः अर्तिः पीडाधतुष्कोटचोरितिकोशात् शिरसिदुःखानिभवंतीत्यर्थः ॥३३॥ तनुगइति कुजस्तनुगोऽक्षिपीडां कस्मिन्नप्यंगे घातादिप्रयुक्तं क्षतं व्रणादिकंच करोति पुनर्भौमो यदि तनुगो नेत्रपाणिगः सक्रूरः

शयनेऽसृजिदारपुत्रगेससुतस्त्रीविलयोथशत्रुगे ॥ प्रथमस्त्र्यसुखंह्यरीक्षितेसयमागौशयनेशिरोर्त्तयः ॥३३॥
तनुगोक्षिगदंक्षतंकुजस्तनुगोसौयदिनेत्रपाणिगः ॥ दहनार्त्तिभयेनभङ्गकृन्मदगोहानिकरोऽङ्गनास्वपि
॥ ३४ ॥ प्रकाशेऽद्रिपुत्रस्थितोहन्तिभौमःस्त्रियंसात्मजांपापयुक्पापकर्त्ता ॥ सुतेपुत्रहानेत्रपाणौसुतादोबु
धःसंसदिस्त्रीसुतस्थःसुतादः ॥ ३५ ॥

संस्तदा दहनार्तिभयेन गृहदेहदाहादिजन्यदुःखभयेन भंगकृत् संतापादिना लिंगदेहविक्षेपकारीत्यर्थः तथा तस्यामेवावस्था यां मदगो भौमः अंगनास्वपि हानिकर इति ॥ ३४ ॥ प्रकाशे इति प्रकाशावस्थायां पंचमे सप्तमे स्थितो भौमः सात्मजांतस्य स्त्रि यं हन्ति यदि भौमः पापयुक्तस्तदा पापकर्त्ता सात्मजस्त्रीविच्छेदानंतरं तस्यापि दुःखद इति तथा बुधो नेत्रपाण्यवस्थायां पंच मस्थः पुत्रं हंति कन्यांच ददाति स एव बुधः संसदि सभावस्थायां स्त्रीसुतस्थः पंचमसप्तमस्थः कन्याप्रद एव पुत्रं न हंतीति विशे

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

यः ॥ ३५ ॥ भुजाविति भुजौ भोजनावस्थायां चापधरे तनौ धनुर्लग्ने गुरौ सपापे च सति विसूनुः पुत्रहीनः पुरुषः स्यात् एवंभूते गुरौ त्रिकोणगे सति अस्वः निर्धनः अत्र गुरोर्धनुःस्थस्वं नापेक्षितं शुक्रस्याह तनाविति लग्नसप्तमदशमान्यतमगे नेत्रपाणौ शुक्रे सति श्रेष्ठं फलं तथाऽनंगतः अनुकूलस्त्रीसंयोगादिजं सुखमपि वाच्यम् ॥ ३६ ॥ शनेराह ददातीति अवस्थासदृशं शुभावस्थायां शुभमशुभायामशुभं सदात्र जन्मनि ददातीत्यर्थः राहोरप्याह सुतांकेति जन्मनि सुतांकगः पंचमनवमगः तमो राहुर्निद्रावस्थायां

भुजौगुरौचापधरेतनौजनोविसूनुरस्वःसकलेत्रिकोणगे ॥ तनौस्मरेखेयदिनेत्रपाणिगेसितेफलंश्रेष्ठमनंगतः सुखम् ॥ ३६ ॥ तदात्यवस्थासदृशंफलंशनिःसदात्रजन्मन्यशुभंशुभंचतत ॥ सुताङ्कगोजन्मनिनिद्रित स्तमःकरोतिमर्त्यंशुभतीर्थवासिनम् ॥ ३७ ॥ अगौशयानेचधनव्ययागेभ्रमत्यवश्यंविधनोजनस्त्रसन् ॥ स्वभोच्चमित्रज्ञसितर्क्षउद्भवेशयानइष्टंफलमन्यथानसत् ॥ ३८ ॥

स्थितः शुभतीर्थवासिनं करोति ॥ ३७ ॥ पुनरपि राहोः अगाविति द्वितीयद्वादशैकादशगे शयाने राहौ सति जनो विधनो भययुक्तश्च सदावश्यं भ्रमति यदि तु शयानोपि राहुः उद्भवे जन्मनि स्वभोच्चमित्रज्ञसितर्क्षे कन्यामिथुनयोः तत्कालमित्रराशौ बुधशुक्रराशिषु त्र स्थित इष्टमेव फलं ददाति अन्यथा तद्राशिस्थित्यभावे तु न शुभफलद इति अत्र स्वभोच्चादिग्रहणेनैव बुधराशिग्रहणे सिद्धे पुन र्बुधग्रहणं बुधेन सहतस्यैकराशिस्थत्वसिद्ध्यर्थमितिभावः ॥ ३८ ॥



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

राह्वादिपापानां पंचमस्थानफले विशेषमाह तुंगादाविति पुत्रस्थो राह्वादिस्तुंगादिगतोपि पापग्रहैर्युक्तो दृष्टश्च सन् निद्रावस्थायां चेत्स्यात्तदा सकलसंतानहारकः यदि शुभग्रहैर्दृष्टयुक्तो भवेत् तदा एकपुत्रहा न सकलसंताननाशक इत्यर्थः ॥ ३९ ॥ एवं सप्तमस्थानेपि विशेषमाह खलइति खलः पापोराह्वादिः सनिद्रः निद्रावस्थायां स्थितः खलैरेव पीडित आक्रांतःमदे सप्तमेस्थितःस्यात्तदा स्त्रियो धर्मपत्न्यो विनाशाय भवति सद्दृशा शुभग्रहः दृष्टियुक्तश्चेत् न स्त्रीनाशोवाच्यःक्वचिदित्यनेन किंचिदंशे स्त्रीसुख

तुंगादावपिपुत्रस्थःपापदृष्टयुतोयदि ॥ निद्रागतोऽपत्यहरःसद्दृष्टस्त्वेकपुत्रहा ॥ ३९ ॥ खलःसनिद्रःखल पीडितोमदेस्त्रियोविनाशायनसद्दृशाक्वचित् ॥ मदेरिगेहेरिपुयुक्तवीक्षितः स्त्रियाक्षयायध्रुवमत्रनिद्रितः ॥ ॥ ४० ॥ शुभदृष्टयुतेत्वेकाभार्यानश्यतिनापरा ॥ कष्टयुक्ताभवेद्भार्यासदसद्दृग्युतेर्नृणाम् ॥ ४१ ॥ निद्रायांसखलखगोष्टमेशयानोवामृत्युंव्रजतिनरोरिपुप्रकोपात ॥ पापेचाष्टमइहसद्ग्रहाढ्यदृष्टेस्वेशाढ्येव्रजतिहरेःपदंद्युनद्याम् ॥ ४२ ॥

विरोधित्वेपि बहुधा तत्कारित्वमपीति सूचितं यदातु सप्तमे शत्रुगृहे वर्त्तमानः शत्रुभिर्युक्तो दृष्टश्चकोपि ग्रहो निद्रावस्थायां स्थितः सन् भवेत् तदा ध्रुवमवश्यमेव स्त्रियाः क्षयाय भवतीत्यर्थः ॥ ४० ॥ अत्र विशेषमाह शुभदृष्टेति तस्मिन्नेव शुभैरपि दृष्टे युक्तेवासति एकैव भार्या नश्यति नापरा परंतु सदसदुभयैर्दृष्टे युक्ते वा नृणां कष्टयुक्ता भार्या तु वक्तव्यैवेति ॥ ४१ ॥ अष्टमस्थाने विशेषमाह

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

निद्रायामिति अष्टमे पापग्रहयुक्तः कोपिग्रहःनिद्रावस्थायां शयनावस्थायां वा स्थितःस्याच्चेत् तदापुरुषः शत्रुकोपान्मृत्युं प्राप्नोति यदात्वष्टमे पापग्रहे सद्भिः शुभग्रहैर्दृष्टे युक्तेच स्वेशाढ्येअष्टमेशयुक्तेचसति एवंविधे योगे जातः पुरुषःद्युनद्यां श्रीगंगायां प्राण वियोगोत्तरं हरेः पदं वैकुण्ठं व्रजति अहोभाग्यमित्यर्थः ॥ ४२ ॥ निजाग्रजातेति पंचमसंकेतसमाप्तिसूचकः श्लोकः स्पष्टार्थः ॥ ४३ ॥ इति पंचमसंकेतव्याख्या ॥ ५ ॥ अथ लोमशसंहितायाः प्रायेणासुलभतया सुधियामप्यपेक्षणीयत्वेन तदुक्तफलानां तैरेवानुभूतत्वे नच तदनुसारेणापि फलानि व्याख्यातुं तत्र श्रद्धामुद्भावयन् प्रतिजानीते अथेति संहितां लोमशनामकमहर्षिप्रणीतां सम्यक्प्रकारे

निजाग्रजातात्मजघासिरामकृतेहिसङ्केतनिधौकृतेऽस्मिन् ॥ ज्योतिर्विदारामदयालुनाम्नासङ्केतसङ्केतइतः समाप्तिम् ॥ ४३ ॥ इतिसंकेतनिधौपंचमःसंकेतः ॥ ५ ॥ अथसंहितांसमनुसृत्यभावजंफलमालिखाम्यनु भवानुभावितम् ॥ रिपुमध्यमित्रनिजभोच्चभेबलंक्रमशोयथोत्तरमुदीरितंबुधैः ॥ १ ॥

णानुसृत्याजन्मकालीनलग्नादिद्वादशभावजं तत्तद्भावस्थत्वादिधर्मवद्ग्रहप्रयुक्तं फलं भोक्ष्यमाणसुखदुःखाद्यात्मकं फलं हेतुकृते इति कोशात् तत्प्रयोजकयोगादीन् आलिखामि निबध्नामि तज्ज्ञापकवाक्यानि संगृह्णामीत्यर्थः ननु तादृशं फलं बहुषुग्रंथेषु निबद्धमस्त्येवात्र को विशेष इत्यत आह अनुभवेति अनुभवसिद्धं अन्यविलक्षणत्वादत्रैतन्निबंधनं नानुचितमिति तत्र ग्रहादीनामत्रोचितबलाज्ञाने एतदुक्तफलनिरूपणस्य दुःशकत्वात्तन्निदर्शनाह रिपुमध्येति प्रथमतः शत्रुगृहे स्थितो ग्रहो



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

बलरहित एव तदपेक्षया मध्यगृहे उदासीनग्रहगृहे स्थितो धिकबलस्ततो मित्रगृहेऽधिकबलस्ततो निजभेस्वराशौ ततो पिस्वोच्चे स्थितो बलवान् एवमुत्तरोत्तरं ग्रहाणां क्रमेण बलं बुधैः प्राचीनैरुदीरितमित्यर्थः ॥ १ ॥ बलज्ञाने जाते तदनुसारेण गर्भगतजीवविशेषज्ञानं जायतामिति विशेषजिज्ञासायामाह ग्रह इति यदा पुमान् पुरुषग्रहः सूर्यभौमादिः सुवर्गे शोभनगृहहोरादिवर्गे स्थित उत्तमबलेनच संयुक्तः स्यात् तदा गर्भे पुरुषो वाच्यः तथा बहुग्रहे चंद्रशुक्रादिरूपे स्त्री कन्या गर्भे वाच्या अन्यथा बलाभावे शन्यादिनपुंसकग्रहराश्यादिवर्गेच नपुंसको वाच्यः द्विदेहवर्गेष्विति उत्तमबलोग्रहस्तत्काले

ग्रहःसुवर्गोत्तमवीर्यसंयुतोयदापुमान्गर्भगतस्तदानरः ॥ वधूग्रहेस्त्रीचनपुंसकोन्यथाद्विदेहवर्गेषुसचेच्छिशुद्वयम् ॥ २ ॥ सबलखगगतांशतुल्यमासैर्यदिसितपक्षइहास्तिगर्भमोक्षः ॥ अधवलदलसंभवेतुमासैर्नयनगुणैरुदितैःसतैर्नवांशैः ॥ ३ ॥

द्विस्वभावराशिवर्गेषुचेत्तदा गर्भे शिशुद्वयं वाच्यमित्यर्थः ॥ २ ॥ अथ गर्भमोक्षः कदेति जिज्ञासायामाह सबलेति वर्त्तमान् काले बलवान् यः पुत्रादिप्रदो ग्रहस्तस्य ये गता अतीता नवांशाः जिज्ञासासमये शुक्लपक्षेच सति तदा तत्तुल्यमासैस्तत्संख्याकैर्मासैर्गर्भमोक्षो निर्देष्टव्यः तदानीं प्रश्नसमयेऽधवलदलसंभवे कृष्णपक्षसंभवे सति तदा उदितैस्तैर्बलवद्ग्रहीयैरतीतैर्नवांशैर्द्विगुणैः कृतैस्तत्संख्याकैर्मासैर्गर्भमोक्षोवाच्य इति इदमप्यत्रचिंत्यं लग्नस्य यावंतो नवांशाः प्रश्नादिकाले भुक्तास्तावन्तो गर्भस्य गता मा

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

सा वाच्याः कलातुल्यानि दिनानि तदर्द्धमितानि वा किंच प्रश्नसमये तनुतस्तृतीयैकादशकोणस्था रविभौमजीवाश्चेत्पुंजन्म वा
च्यं किंचेदमपि संकेतसिद्धं प्रायेण जन्ममासादाधानमासश्चतुर्थः तिथिस्तृतीया नक्षत्रं दशमं लग्नं पंचमं वारः षष्ठ इत्यादिज्ञेय
म् ॥ ३ ॥ गर्भक्षययोगमप्याह लग्नादिति योखिलोत्तमबलोग्रहः पुत्रादिप्रदत्वेनाभिमतः स एव यदि लग्नात्त्रिखगः षडष्टव्ययगः
सन् षडष्टरिपुगैः षष्ठाष्टमस्थैः शत्रुराशिस्थैश्च पापग्रहैर्युतो दृष्टश्च भवेत् तथा दुःस्थः नीचास्तादिः पापाक्रांतोऽरिभिर्ग्रहःयुद्धादौ

लग्नात्षडष्टरिपुगैरशुभैर्युतोथदृष्टोखिलोत्तमबलस्त्रिकगश्चदुःस्थः ॥ स्याद्गर्भहागतनवांशमितैर्हिमासैःशा
न्त्यादिनाभवतिभद्रमपिप्रमाणात् ॥ ४ ॥ राशिःसकालपुरुषस्यभवेद्यदङ्गंशीर्षादिकेत्रतपनेतुतिलादिचि
ह्नम् ॥ वह्नेःकुजेतमसिकाष्ठशिलादिजंस्यान्मन्देतुधातुजमथार्चितइष्टचिह्नम् ॥ ५ ॥

विजितश्च भवेत्तदा स एव ग्रहो गर्भहा गर्भनाशकः स्यात् गतनवांशमितैः उत्तमबलग्रहगतनवांशमितैरुक्तैरेव मासैर्गर्भनाश इत्य
र्थः तत्रोपायं शास्त्राज्जानीयादित्याह शांत्यादिनेति प्रमाणात् शास्त्रात् ग्रहशांत्यादिनोपायेन भद्रमपि यथा गर्भक्षयो न भवतीत्यर्थः
॥ ४ ॥ यथार्थजन्मलग्नादिनिश्चायकानि लोकश्रद्धोत्पादकानि चिह्नानि दर्शयति राशिरिति कालपुरुषस्थकल्पितद्वादशरा



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

श्यात्मकावयवस्य सराशिः शीर्षादिरूपे यस्मिन्नंगे भवेत् तत्र तपने सूर्ये सति तिलादिचिह्नं वाच्यं कुजे तत्र स्थिते सति वह्नेः तदाहादिजमित्यर्थः तमसि राहौ काष्ठशिलादिघातसंभवं मन्दे शनौ तु धातुजं शस्त्रपाताद्युद्भवं अर्चिते गुरौ तत्रस्थे सति इष्टचिह्नं तिलादि शुभचिह्नमिति कालपुरुषावयवराशयस्तु कालांगानिवरांगमाननमुरोहृत्क्रोडवासोभृतोवस्तिर्व्यंजनमूरुजानुयुगले जंघेततोंघ्रिद्वयम् ॥ मेषाश्विप्रथमानवर्क्षचरणाश्चक्रस्थिता राशय इत्याचार्योक्ता इति कादिविलग्नविभक्तभगात्र इत्यप्यत्राचिंत्यम् ॥५॥ तत्रबुधचन्द्रादौविशेषः द्वित्र्यादीति कालपुरुषावयवराशौद्वित्रिचतुरादिपापसहितेसबुधेच अस्त्रजातं रुधिरोत्थं किणादिचिह्नंवाच्यम् ।

द्वित्र्यादिपापसहितेसबुधेऽस्त्रजातंकुब्जोरवीक्षितविधावशुभांशदृक्के ॥
पंगुश्शनीक्षितविधौरविभार्द्धयातेकाणोव्ययस्वगसितारइनेन्दुदृष्टे ॥ ६ ॥

कुब्जत्वयोगमाह कुब्ज इति जन्मनि रविणा पूर्णदृष्टेचन्द्रे अशुभग्रहनवांशद्रेष्काणस्थे सति कुब्जो भवतीत्यर्थः पंगुत्वयोगमाह पंगुरिति शनिदृष्टे चन्द्रे रविहोरांगतेसति नरः पंगुर्भवति काणत्वयोगमाह काणइति सूर्यचन्द्राभ्यांदृष्टे व्ययस्वगसितारे सति क्रमेण व्ययगे शुक्रे सति स्वगे द्वितीयस्थे आरे भौमे चसति उभयस्मिन्नेकैकस्मिन् वाद्वाभ्यां दृष्टे सति पुरुषः काणो भवति वस्तुत उभयस्मिन्नेवोभयदृष्टेसत्येवेत्यभिप्रायेणैव व्ययस्वगसितारे इत्येकवचनांतं पदं प्रयुक्तं यद्वा व्ययस्वगौसितारौ यस्माल्लग्नात्तत् तस्मिन् अत्र वृत्तौ समस्तस्यान्यार्थत्वेपि व्युत्पत्तिवैचित्र्यात्सतितात्पर्येपदार्थैकदेशेनापिदेवदत्तस्य गुरुकुलमित्यादाविव पदार्थांतरस्यान्वयदर्शना

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

सं०नि० त्सितारयोरेवेंदुसूर्यदृष्टत्वं विशेषणं बोध्यम् अस्तुवा लग्नस्यापीनेंदुदृष्टत्वं तदापि न योगहानिरिति ॥ ६ ॥ वामनत्वयोगमाह कीटे सटी०

॥ ७१ ॥ लग्नेइति वृश्चिकेजन्मलग्ने कर्मगे दशमगे सूर्ये कुजार्काभ्यां दृष्टेचन्द्रेमकरगेचसति जातो वामनो ह्रस्वः स्यात् अत्रैवयोगांतरमाह सं० ६

एवमिति लग्नेशे स्वगे द्वितीयगे मंददृष्टेनचन्द्रेणयुतेसतिनरोह्रस्वः स्यात् पुनर्योगांतरं धर्मनाथइति नवमेशेद्वितीयगेमंददृष्टचन्द्रेण युते प्राग्वत् ह्रस्वः स्यादिति ॥ ७ ॥ जायादौ कुत्सितचिह्नयोगमाह जायेति यस्यजन्मनि लग्नं लग्नेशश्चतथा सप्तमंसप्तमेशश्चक्रूरा

कीटेलग्नेकर्मगेर्केकुजार्कदृष्टेचंद्रेचैणगेवामनःस्यात् ॥ एवंलग्नेशेस्वगेमन्ददृष्टेन्द्वाढ्येह्रस्वोधर्मनाथेपिचै वम् ॥ ७ ॥ जायाजायेशौतनूतन्वधीशौक्रूरौचेत्स्तस्तस्यजायाद्दुरंका ॥ अम्बाम्बेशौताद्दशौतस्यमाता भाग्यभ्रात्रीशौतथाचेद्भगिन्यः ॥ ८ ॥खलेस्मरेशेकटुवाक्प्रकोपनाप्रियाप्रसन्नाचशुभेप्रियंवदा ॥नुरुद्धवां गात्सयमोडुपेमदेसकैतवास्त्रीयदितौस्त्रियानरः ॥ ९ ॥

वित्यस्योभयत्रान्वयः लग्नंलग्नेशश्चोभावेव क्रूरौ तथासप्तमंसप्तमेशश्चोभौ क्रूरौ तथा क्रूरचतुष्टयसत्त्व एवायंयोगः अन्यथाऽन्यतर वैयर्थ्यापत्तेः दुरंका कुष्ठादिविकृतचिह्नयुक्ता जाया एवं चतुर्थचतुर्थेशलग्नलग्नेशयोगे तस्य मातादुरंका एवं लग्नलग्नेशौ भाग्य तृतीयेशौ क्रूरौ चेत् भगिनीदुरंका वाच्या ॥ ८ ॥ जायायाः कोपप्रसादयोगौ क्रमेणाह खलेइति स्पष्टं दंपत्योः कुटिलत्वयोगमाह ॥७१॥

नुरिति नुः पुरुषस्य उद्धवांगात् जन्मलग्नात् सप्तमेचन्द्रशनियुक्ते स्त्री कुटिला स्त्रियो लग्नात्सप्तमे चन्द्रशनियुक्ते पुरुषः कुटिलो ज्ञेय

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

इति ॥ ९ ॥ जननीजाययोर्व्यभिचारयोगमाह खलइति पूर्वार्द्धे मातुर्व्यभिचारयोगः उत्तरार्द्धे स्त्रियाः अर्थः स्पष्टः मदाङ्गपा
विति पाठे तु मदे सप्तमस्थाने कश्चिच्छुभे लग्नेशश्चापि शुभश्चेदित्यर्थः कार्यः मम तु सुखांगपाविविति पाठः प्रतीयते इति ॥ १० ॥
अथोक्तयोगफलं कुत्र दशांतर्दशादौ वाच्यमित्याकांक्षायामाह राशीति यतमे यावति यत्संख्ये राशिद्रेष्काणे प्रथमे द्वितीये तृतीये
वा ग्रहःस्यात् तस्य दशायामपि प्रथमद्वितीयाद्यन्यतम एव त्रिभागे तस्य ग्रहस्य योगकर्त्तुः फलंवाच्यं ननु दशानां बहुत्वात्प्रकृते

खलोम्बिकेशोथमदाङ्गपौशुभौतदामतास्यव्यभिचारिणीप्रसूः ॥ खदारपौचेदशुभौजलांगपाशुभौतदास्त्री
व्यभिचारतत्परा ॥ १० ॥ राशित्रिभागेयतमेग्रहःस्याद्दशात्रिभागेपिफलंतुतस्मिन् ॥ दशातुशास्त्रात्परि
कल्पनीयायायत्रयुक्तासुधियोद्भवादौ ॥ ११ ॥

कस्या उपयोग इत्यतआह दशात्विति पैंडंभानौ निसर्गंप्रभवमुडुपतौ रश्मिजं सोमपुत्रे भौमे भिन्नाष्टवर्गोदितमसुरगुरौ कालचक्रो
द्भवायुः ॥ देवाचार्ये दशायुर्दिनकरतनये सामुदायं बलिष्ठे लग्ने यद्यंशकायुर्भवति बलयुते प्राहुराचार्यवर्या इति दशाकल्पनमपि
किंच गृध्रोलूकशुकध्वांक्षसर्पादीनां सहस्रकम् । श्येनवानरभल्लूकमंडूकानां शतत्रयम् । राक्षसानां सार्द्धशतं खार्काब्दायुर्नृहस्तिनाम्॥सि
द्धाब्दागोमहिषयोः पंचविंशत्खरोष्ट्रयोः ॥ दंताब्दाश्वानखाब्दायुर्मयूरा अष्टचब्दाअजाः ॥ हंसस्य पंचनवकं द्वादशाब्दाः पिकाः

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

शुकाः ॥ तथा पारावतानां च कुक्कुटस्याष्टवत्सराः ॥ सत्तांडजादीनामायुर्नानाजात्यायुरीरितमित्यपि ॥ ११ ॥ अथ परजा तियोगांस्त्रिभिः श्लोकैराह खेटादृष्टइति केनापि ग्रहेणादृष्टे अंभसि चतुर्थभावे अथवारियुक्तेक्षिते चतुर्थे इत्येको योगः एवं लग्ने द्वित्रिपंचमषष्ठेशे सतीति द्वितीयः खेटादृष्टत्वमत्रापियोज्यं यद्वा क्रूरो लग्ने मदे शुभो दशमे शनिश्चेति तृतीयः यद्वा लग्ने चंद्रस्तृ तीये भौमशुक्राविति चतुर्थः ॥ १२ ॥ तनाविति लग्ने कुजागू. भौमराहू सप्तमे चंद्रशुक्राविति पंचमः यद्वा व्ययषष्ठद्वितीयाष्टमस्थाः

खेटादृष्टेवारियुक्तेक्षितेम्भस्येवंलग्नेद्वित्रिपुत्रारिपेवा ॥ यद्वाक्रूरोङ्गेमदेसन्खआर्किर्यद्वाङ्गेब्जोभ्रातृगोभौम शुक्रौ ॥ १२ ॥ तनौकुजागूमदगाविनेन्दूयद्वान्त्यषड्व्यष्टसुयस्यखेटाः ॥ केंद्रेषुशून्येष्वथनेज्यवर्गोङ्गेवाङ्ग चन्द्रोयदिगुर्वदृष्टौ ॥१३॥ यद्वाङ्गपःसास्तपतिःस्थिरांगेखांगाम्बुगोब्जःसखलोथवांगम ॥ नेशेक्षितंस्युःपर जातयोगाःस्यात्साच्छचंद्रेनवमेसतास्त्री ॥ १४ ॥

सर्वे ग्रहाः केन्द्रेषु ग्रहाभावस्तदा षष्ठः यद्वा लग्ने गुरुवर्गो न स्याल्लग्नचंद्रान्यतरस्मिन् गुरुदृष्टयभावो वा तदा सप्तमः ॥ १३ ॥ यद्वा लग्नेशः सप्तमेशयुक्तः स्थिरलग्ने भवेत्तदापीत्यष्टमः यद्वा लग्नदशमचतुर्थेषु सपापश्चंद्रस्तदापीति नवमः यद्वा लग्नं स्वस्वामिना शुभैर्वा न दृष्टं तदापीति दशमः एते परजातयोगा दश प्रोक्ताः खेटादृष्टत्वादिकं सर्वत्र यथासंभवं योजनीयम् अथ स्त्रियाः परपुरु षगामित्वयोगमाह स्यादिति साच्छचंद्रे शुक्रसहिते चंद्रे नवमगे सति स्त्री असती परपुरुषगामिनी स्यादित्यर्थः ॥ १४ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अथलग्नादिद्वादशभावस्वामिनां प्रत्येकं प्रत्येकस्थानप्रयुक्तमनुभूतं प्रतिभावं सजातीयै रमणीयैरेववृत्तैः फलं निरूपयितुं प्रतिजा नीते अथेतिगद्येन तत्रतावत्प्रथमं लग्नेशफलं स्वागतावृत्तनिबद्धैरष्टभिः श्लोकैराह लग्नगे इति बाहुवीर्येण विहितानि साधि तानि उत्कटानि इतरैरसुकराणि कार्याणि येन मनस्वी उदारप्रकृतिः व्यभिचारी परस्त्रीगामी तेनातिकामीत्यर्थः ॥ १९ ॥ लग्नेशस्य द्वितीयस्थत्वप्रयुक्तफलमाह अर्थगे इति धनिलीलः धनाभावेपि प्रतापशाली उदारश्च शुभशीलः शुचौतुचरितेशील

अथस्थानप्रयुक्तलग्नादिभावेशफलम् ॥ लग्नगेतनुपतौसुभगांगोबाहुवीर्यविहितोत्कटकार्यः ॥ चञ्चलोगत भयश्चमनस्वीदारयुग्मयुगपिव्यभिचारी ॥ १५ ॥ अर्थगेतनुपतौधनिलीलःपण्डितोबहुगुणःशुभशीलः ॥ लोलधीः सुकृतकृद्बहुमानीनैकदारसुरतोपिसुतार्थी ॥ १६ ॥ विक्रमेतनुपतावथषष्ठेसिंहतुल्यबलवि क्रमशाली ॥ सर्वसम्पदधिकोगुणिमान्यःस्याद्द्विभार्यउपभूपवदान्यः ॥ १७ ॥

मिति कोशात् शीले शुभत्वादेः साहजिकत्वेपि परोपकारकत्वादिप्रत्यायनार्थं शुभपदं शुभशुद्धाचार इत्यर्थः यद्वाशीलं स्वभावे सद्वृत्ते इति कोशात् शुभसत्स्वभावः बहुमानी प्रतिष्ठितः नैकेति नैकेषु दारेषु सुरतं निधुवनं यस्य अनेकदारसत्त्वेपि सुतार्थी पुत्र सुखरहितइत्यर्थः ॥ १६ ॥ तृतीयषष्ठस्थत्वप्रयुक्तफलं विक्रमे इति उपभूपवदान्यः उपभूपेषु राजसमीपवर्तिषु मंत्र्यादिषु वदा



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

न्यः वल्गुवाक् बहुपदो वा प्रधानइति भावः ॥ १७ ॥ चतुर्थदशमस्थानयोः फलं अंबुविष्णुपदयोरिति अंबुचतुर्थं विष्णुपदंगगनं दशममित्यर्थः बहुकामः मनोरथादिभिर्व्याप्तहृदयः अभिजनेन सद्गुणैश्च वामः रमणीयः सुसेव्य इति कृतार्थोवा ॥ १८ ॥ पंचम स्थानफलं पंचमेइति प्रागपत्येति प्रथमापत्यवियोगप्रयुक्तपरितापेन परीतो दग्धहृदय इत्यर्थः नृपतिसद्मनिवीतः राजमंदिरे एव तत्सेवयानिस्सारतां प्राप्तः यद्वा निवीतः पटवत् सर्वतः प्रावृतः सर्वथा राजसेवयैव स्वकालात्ययकारीत्यर्थः ॥ १९ ॥ सप्तमफलं दारगे

अम्बुविष्णुपदयोस्तनुनाथेतातमातृसुखसम्पदुपेतः ॥ सोदरैरुपचितोबहुकामःसुन्दरोऽभिजनसद्गुण
वामः ॥ १८ ॥ पञ्चमेतनुपतौसुतसौख्यंमध्यमंनिगदितंमतिमद्भिः ॥ प्रागपत्यपरितापपरीतःक्रो
धवान्नृपतिसद्मनिवीतः ॥ १९ ॥ दारगेतनुपतावुतदारादारितासुविकलामलधाराः ॥ स्यात्प्रवासनिरतो
विधुरोतोभूपभूरपिदरिद्रइवार्त्तः ॥ २० ॥ अष्टमेतनुपतौव्ययमेवाद्यूतमन्त्रनिपुणोपिकदर्यः ॥ स्तेयकृ
त्परकलत्रचरित्रोदूषितायतिरनर्थवहित्रः ॥ २१ ॥

इति तस्य दाराः स्त्रियः दारितासुविकलाः दारितैः पीडितैरसुभिः प्राणैर्विकलाः संज्ञाशून्याः अतएव ता मलधाराः मलधारिण्यः म लधारायुक्ता वा अत्रहेतुः प्रवासनिरतः अतएव सोपि विधुरः पत्नीसुखरहितः यतः जीवनोपायान्वेषणया भूपभूरपि राजपुत्रोपि द रिद्रइवार्त्तः सन्नितस्ततो भ्रमतीत्यर्थः ॥ २० ॥ अष्टमद्वादशयोः फलम् अष्टमेइति परकलत्रेषु चरित्राणि व्यामोहार्थं यस्य अतएव

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

दूषितायतिः दूषिताबहुदुःखफलिका आयतिरुत्तरकालो यस्य अत्रहेतुः अनर्थानां पोत इत्यर्थः ॥ २१ ॥ नवमलाभस्थानयोः फलं भाग्यभे इति सुहितः सदातृप्तो विशेषलिप्सारहितः ॥ २२ ॥ इतिलग्नेशफलानि ॥ १ ॥ अथवंशस्थवृत्तैर्द्वितीयेशस्य तत्र तत्र स्थितिफलानि तत्र धनेशस्य धनस्थत्वप्रयुक्तफलं धनाधिनाथइति अभिमाने हेतुः मृषेति बलारोग्यादिना नवान् यूनोपि मृषाकलयन् तुच्छीकुर्वन् एतेन वीर्यवत्त्वमुक्तं परंतु अनेककलत्रसुखवत्त्वेपि उरःपुरस्सरःऔरसःपुत्रस्तस्य क्वचिदपि कथंचिदपि न स्यात् ॥ १ ॥ २३ ॥

भाग्यभेतनुपतावथवायेभाग्यवान्सुजनवल्लभमूर्तिः ॥ कृष्णभक्तिनिरतःपटुवक्तापुत्रदारसहितःसुहितश्च ॥ २२ ॥ इतिलग्नभावः ॥ १ ॥ धनाधिनाथेधनगेधनान्वितोऽभिमानवान्स्यात्कलयन्मृषानवान् भवेत्कलत्रद्वितयंत्रयंचवानचक्वचित्सूनुरुरःपुरस्सरः ॥ १ ॥ २३ ॥ धनेश्वरेविक्रमगेथवांबुगेपराक्रमी स्यान्मतिमान्गुणाग्रणीः ॥ सदासतृष्णस्त्रिदिवेशवेधकः पराङ्गनारत्यभिसारपेशलः ॥ २ ॥ २४ ॥

तृतीयचतुर्थस्थत्वप्रयुक्तं धनेशस्य फलं धनेश्वरइति सतृष्णः तृष्णया लिप्सया सदा व्याकुलचित्तः अतएव त्रिदिवेशवेधकः देवप्रार्थनयाप्यऽतिलिप्सावतो मनोरथासिद्धौ देवानपि निंदतीत्यर्थः दुष्टत्वादेव परांगनारत्यभिसारपेशलः परांगनासु रत्यर्थो योऽभिसारः संकेतस्थानगमनागमनादिरूपस्तत्रपेशलः कामशास्त्रोक्ताभिसारप्रकारादावूहापोहकुशल इत्यर्थः ॥ २ ॥ २४ ॥

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

सं०नि०
॥७४॥

धनेशस्य षष्ठस्थत्वप्रयुक्तफलं धनेश्वरइति पटुत्वपाटच्चरताकटोत्कटः पटुत्वस्य परकीयचातुर्यस्य नानाछद्मादिनापि कार्य संपादनकौशलस्य पाटच्चरतायाः स्तैन्यस्य कटे वर्षणेदाने उत्कटः समर्थः यद्वा कटेन वर्षणेन वितरणेन उत्कटः प्रसिद्ध इत्यर्थः कृतध्वजः पाषंडप्रधानः अधिगुह्यलांछनः गुह्येइत्यधिगुह्यं तादृशं लांछनं चिह्नं यस्य ॥ ३ ॥ २५ ॥ सप्तमस्थधनेशफलं धने श्वरेइति चिकित्सकः वैद्यः निजांगना तस्य पत्नी वारवधूरिव वेश्येवान्यगा परपुरुषगामिनी प्रसूर्मातापि तस्य असूरिव्यभिचार

सटी०
सं० ६

धनेश्वरेरातिभगेरिपोर्द्धनंजनः समाप्नोतिततःक्षयंपुनः ॥ पटुत्वपाटच्चरताकटोत्कटःकृतध्वजःस्याद धिगुह्यलाञ्छनः ॥ ३ ॥ २५ ॥ धनेश्वरेकामगतेचिकित्सकोनिजान्यजायाभिगमेषुकोविदः ॥ निजां गनावारवधूरिवान्यगाप्रसूरसूरिव्यभिचारपारगा ॥ ४ ॥ २६ ॥ धनेश्वरेमृत्युगृहंगतेनरोनिधिंलभेतक्षि तिगंधनंचवा ॥ स्त्रियाःसुखंज्येष्ठसहोदरस्यवानसोश्नुतेकापिपरंत्वघंततः ॥ ५ ॥ २७ ॥

पारगा असूरिभिर्महामूढैः सह यो व्यभिचारः दुष्टफलजनकः संबन्धस्तस्य पारगा महामूढानपि निधुवनादिशिक्षासुव्यभिचार कुशलतयोपदिशति सुरतप्रकारान् तेनातिव्यभिचारादिकर्मसु निपुणेत्यर्थः ॥ ४ ॥ २६ ॥ अष्टमस्थधनेशफलं धनेश्वर इति क्वापिपरंत्वघं ततः ततःज्येष्ठसहोदरात् पत्न्याश्च सुखंनाश्नुते पूर्वपरामर्शकरणात् ताभ्यां परम अघं कष्टम् अश्नुते प्राप्नुयादित्यर्थः॥५॥२७॥

॥७४॥

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

नवमाययोः फलं धनेश्वरे इति स्पष्टम् ॥ ६ ॥ २८ ॥ दशमस्थलं धनाधिनाथेइति ॥ ७ ॥ २९ ॥ व्ययस्थफलं धनाधिनाथ इति ॥ ८ ॥ ३० ॥ लग्नपंचमस्थधनेशफलं धनेश्वरइति अनंगविधिप्रचारधीः अनंगविधेर्मैथुनादौ भोगासनादीनां प्रचारेधीर्विशेषज्ञानंयस्य कैतवी दंभी शठ इत्यर्थः व्याजदंभोपधयश्छद्मकैतवे इत्यमरः स्पष्टमन्यत् ॥ ९ ॥ ३१ ॥ इतिधनेशफलानि ॥ २ ॥

धनेश्वरेदिष्टगआयगेथवाजनःसमुद्योगपरःपटुर्भवेत् ॥ धनीचबाल्येबहुधारुजार्दितःसयावदायुःपरतःसुखान्वितः॥ ६ ॥ २८ ॥ धनाधिनाथेऽमरवर्त्मगामिनिस्मरप्रियोमानधनीचपंडितः ॥ अनेकदारैर्वसुभिःशुभैर्युतःश्रितोर्थिभिःपुत्रसुखेनवर्ज्जितः ॥७॥ २९ ॥ धनाधिनाथेव्ययगेतिसाहसीवृथाभिमानीधनधर्मविच्युतः॥ स्वजीवनंभूपजनप्रसादजंसुखंनतस्यप्रथमात्मजन्मनः॥८॥३०॥धनेश्वरेलग्नगतेथपुत्रगेनरःसदास्यात्स्वकुटुंबकण्टकः॥सुनिष्ठुरोनंगविधिप्रचारभीःपरोपकार्यल्पधनश्चकैतवी ॥९॥ ३१ ॥इतिधनभावः॥२॥सहजेसहजेश्वरेधनीबहुधाविक्रमवान्युतःसुतैः ॥ सुखमीप्सितमश्नुते सदापरमानंदितमंजुमन्दिरः ॥ १ ॥ ३२ ॥

अथ तृतीयेशफलानि वियोगिनीवृत्तैर्वकुंतत्रतावत्तृतीयेशस्य तृतीयस्थत्वप्रयुक्तफलमाह सहजेइति परमानंदितमंजुमंदिरःपरमानन्दितश्चासौ मंजुमंदिरस्सौंदर्यमंदिरश्चेति यद्वा परमानंदजनकं मंजु मंदिरं यस्य ॥ १ ॥ ३२ ॥

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

तृतीयेशस्य चतुर्थपंचमस्थत्वफलं सहजाधिपताविति ॥ २ ॥ ३३ ॥ तस्यषष्ठस्थितिफलं सहजेति ॥ ३ ॥ ३४ ॥ तस्य नवमव्यय स्थत्वयोः फलं नवमव्ययोरिति दिष्टकला भाग्योदयः अबलाबलात् स्त्रीप्रभावात् अस्यसविता पिता परापराधकर्त्ता ॥ ४ ॥ ३५ ॥

सहजाधिपतौसुखेसुतेगगनेवास्थितवत्यसौजनः ॥ विविधाप्तिसुखोधनीसुधीरपिजायास्यपरंतुनिष्ठुरा ॥२॥ ॥ ३३ ॥सहजाधिपतावरातिगेसहजोरिःसहजस्यचस्वयम्॥धनवानसुखीस्वमातुलैरतिमिच्छेदपिमातुलस्त्रिया ॥३॥ ३४ ॥ नवमव्ययययोःसहोदराधिपतौदिष्टकलाबलाबला ॥ सवितास्यपरापराधकःसुखसामग्र्यपि दुःखमुक्तये॥ ४ ॥ ३५ ॥ सहजाधिपतौमदेष्टमेनृपतिद्वारिमृतोध्रुवंभवेत् ॥ प्रथमेवयसिस्वतोऽसुखीपरतंत्रः परचौर्यकर्मकृत्॥ ५ ॥ ३६ ॥ सहजेश्वरआयलग्नयोर्निजदोरर्जितवित्तसौख्यभाक्॥परसेवकआश्वमर्षयुक् कृशदेहःपरसाहसीजडः ॥ ६ ॥ ३७ ॥ सहजाधिपतौधनस्थितेपरजायाधनवृद्धलालसः॥ अक्रुशोग्रुदमैथुनप्रियःसुखहीनोह्यलसोल्पकर्मवान् ॥७॥ ३८ ॥ इतितृतीयभावः ॥ ३ ॥



तस्य सप्तमाष्टमस्थत्वफलं सहजेति परेषां वस्तुनश्चौर्यात्मकं कर्म करोतीति ५ ॥ ३६ ॥ तस्य लग्नस्थत्वफलं सहजेश्वरे इति आश्वमर्षयुक् झटिति क्रोधवान् ॥ ६ ॥ ३७ ॥ तस्य धनस्थत्वफलं सहजेति ॥ ७ ॥ ३८ ॥ इति तृतीयेशफलानि ॥ ३ ॥

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

अथ चतुर्थेशफलान्युपजातिवृत्तैः स्फुटयंस्तस्य चतुर्थस्थत्वफलं तुर्येश्वर इति विदग्धे नगरोद्भवइतिमेदिनीतः नागरश्चतुरः ॥ १ ॥ ३९ ॥ तस्य नवमपंचमस्थत्वफलं तुर्येश्वर इति स्वबाहूर्जितवित्तभोगी स्वार्जितवित्तसुखादिसाक्षात्कारवान् स्पष्टमन्यत ॥ २ ॥ ४० ॥ तस्य षष्ठस्थत्वफलमाह तुर्येश्वर इति मनस्वी पराक्रमवान् बहुमातृकः बह्वीभिर्मातृभिः पालनीयः

तुर्येश्वरेतुर्यगतेसुमंत्रीजनोजनानामधिपःसुखीच ॥ मानीधनाढ्यःशुभशीलवृत्तःस्यान्नागरोसाववलाप्रियोपि॥ १ ॥ ३९ ॥ तुर्येश्वरश्चेन्नवमेसुतेवासुखीनरःसर्वजनप्रियश्च ॥ गोविन्दपादार्पितचित्तवृत्तिर्मानीस्वबाहूर्जितवित्तभोगी॥ २ ॥ ४० ॥तुर्य्येश्वरेऽरातिगतेनरःस्यात्क्रोधीमनस्वीबहुमातृकश्च ॥ स्तेनोभिचारीखलचित्तवृत्तिःस्वयंनिजानन्दविरोधशीलः ॥ ३ ॥ ४१ ॥ सुखेश्वरेसप्तमगेंगगेवाविचित्रविद्यासहितोनरः स्यात् ॥ स्वपूर्वसंपादितवस्तुरिक्तःप्रभूतदाराभिभवाद्विविक्तः ॥४॥ ४२ ॥ तुर्येश्वरेरंध्रगतेव्ययेवासुखेनहीनः पुरुषोनितांतम् ॥ तातस्यचस्वल्पसुखेनयुक्तोनपुंसकःस्यादथजारजातः ॥ ५ ॥ ४३ ॥

अभिचारी मारणमोहनादिक्रियासु कुशलः ॥ ३ ॥ ४१ ॥ तस्य लग्नसप्तमस्थत्वप्रयुक्तफलमाह सुखेश्वर इति स्वपूर्वेति स्वपूर्वसंपादितैर्वस्त्रमंदिरालंकारादिवस्तुभिर्विरहितः प्रभूतैर्दारादिकर्तृकतिरस्कारादिभिः विविक्तः गृहं त्यक्त्वा वनचरः स्यात् ॥ ४ ॥ ४२ ॥ तस्याष्टमव्ययस्थत्वफलमाह तुर्येश्वर इति जारजातः नमातृपाणिग्राहकजातः ॥ ५ ॥ ४३ ॥

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

सं०नि०

॥७६॥

तस्य कर्मगतत्वफलमाह तुर्येश्वरइति सदार्यवृत्तिः सतां महात्मनामिव आर्या वृत्तिर्यस्य रसायनज्ञः औषधविशेषैस्ताम्रादीनि सुवर्णानि करोतीत्यर्थः ॥ ६ ॥ ४४ ॥ तस्य तृतीयस्थत्वप्रयुक्तफलमाह तुर्येश्वरइति वदान्यः दाता बहुप्रदः वल्गुवाग्वा चतुरः क्रियासु कुशल इत्यर्थः स्वबाह्वर्जित वित्तधन्यः स्वार्जितधनेन नानाधर्मसंपत्त्या जितलोकः ॥ ७ ॥ ४५ ॥ तस्य वित्तगतत्वफलमाह तुर्येश्वरइति कुहकान्वितः दंभेनध्यानादिकर्त्ता साहसी अविमृश्यैव कर्माणि करोतीत्यर्थः ॥ ८ ॥ ४६ ॥ इतिचतुर्थेशफ

तुर्येश्वरेकर्मगतेनरःस्यान्नृपालमान्यश्चसदार्यवृत्तिः ॥ रसायनज्ञश्चसदाप्रहृष्टोभुनक्तिसौख्यंविविधंजगत्याम् ॥६॥ ४४ ॥ तुर्येश्वरेविक्रमआयभेवानचातिरोगीपुरुषोधनीस्यात् ॥ उदारमूर्तिर्गुणवान्वदान्यःशूरःस्वबाह्वर्जितवित्तधन्यः॥ ७ ॥ ४५ ॥ तुर्येश्वरेवित्तगतेसुभोगीकुटुंबयुक्तःकुहकान्वितश्च ॥ स्यात्साहसीमानधनैःसमेतःसम्पत्प्रधानःसकलोपकर्त्ता ॥८॥४६॥ इतिसुखभावः ॥४॥ यस्यसुताधिपतिःसुतगःस्यात्तस्यनिजौरसिजोनसुजीवः ॥ सक्षणिकःकिलनिष्ठुरभाषीधर्मरतोमतिमानुपकारी ॥ १ ॥ ४७ ॥

लानि ॥ ४ ॥ अथ पंचमेशफलानि दोधकनामकवृत्तैः कीर्त्तयंस्तावत्पंचमस्थत्वप्रयुक्तफलं निरूपयति यस्येति पंचमेशः पंचमे एव चेत्स्यात्तदा तस्य निजौरसिजः स्ववीर्येणोत्पन्नः पुत्र औरस इतियावत् न सुजीवः सुखेनजीवनरहितः यदि जीवी तर्हि दुःखेनैव स्वयं सः क्षणिकः निर्व्यापार एव तिष्ठति क्षणिककोपप्रसादशीलो वा क्षणेरुष्टः क्षणे तुष्टा इति न्यायेनानवस्थितचित्तः निष्ठुरभाषी

सटी०

सं० ६

॥७६॥

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

परुषभाषी ॥ १ ॥ ४७ ॥ तस्यषष्ठव्ययस्थत्वफलमाह पंचमपे इति धनंदत्त्वा मूल्येन क्रीतः सुतो येन ॥ २ ॥ ४८ ॥ तस्य सप्तम
स्थत्वफलं पंचमइति मन्मथगेहे सप्तमे॥ ३ ॥ ४९ ॥ तस्य द्वितीयाष्टमस्थित्योः फलं पंचमप इति॥४॥ ५० ॥ तस्य नवमदशमान्यत
मस्थत्वफलमाह पंचमप इति स्वकुलांबुधौ चंद्रइवजात इत्यर्थः तीर्थकृत् तीर्थाटनशीलः निपानागमादिकर्त्ता वा निपानागमयोस्तीर्थ

पंचमपेरिपुगेव्ययगेवास्वीयसुतोस्यरिपुत्वमुपेयात् ॥ वामृतपुत्रउताप्यनपत्यःक्रीतसुतःपरदत्तसुतोवा ॥
॥ २ ॥ ४८ ॥ पंचमपोयदिमन्मथगेहेसत्यवचाःशुभकर्मरतश्च ॥ तुंगतनुःपतिभक्तिसमेतोधीरतरःस्थिरचि
त्तउदारः ॥ ३ ॥ ४९ ॥ पंचमपेष्टमगेधनगेवाऽपत्यबहुत्वमुदीरितमाद्यैः ॥ श्वाससकासरुजार्दितदेहःक्रो
धयुतोधनितामदमत्तः ॥ ४ ॥ ५० ॥ पंचमपोनवमेगगनेवायस्यचतस्यसुतोनृपतुल्यः ॥ ख्यातियुतःस्वकु
लांबुधिचंद्रस्तीर्थकृदुद्यमसंहृततन्द्रः ॥५॥ ५१ ॥ पंचमपेसमवाप्तिगृहस्थेसर्वजनप्रियमूर्तिरुदारः ॥ ग्रंथकृदु
त्तमधीर्बहुपुत्रःकोविदमान्यउपद्रवशून्यः॥ ६ ॥ ५२ ॥ पंचमपेतनुगेसहजेवास्यात्कितवःपिशुनोबहुदंभी॥
लोष्टमपीहनतेनवितीर्णंक्वापिजनायधनस्यकथाका ॥ ७ ॥ ५३ ॥

मिति कोशात् उद्यमसंहृततंद्रः अनलसः ॥ ५ ॥ ५१ ॥ तस्यलाभस्थत्वफलं पंचमप इति ॥ ६ ॥ ५२ ॥ तस्यलग्नतृतीयस्थत्वफलं
पंचमप इति कितवो द्यूतकृत् पिशुनः खलः परदोषसूचकः लोष्टं मृत्खंडोपि तेन न वितीर्णं न दत्तम् अत्यंतकदर्य इत्यर्थः॥ ७ ॥ ५३॥

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

तस्य चतुर्थस्थत्वफलमाह पंचमप इति सचिवो राजमंत्री युवदेहः समर्थसुंदरशरीरः सत्कमलाक्रमलालितगेहः सत्कमलाया अन्याया नर्जितायाः क्रमोनियोग आक्रमणं वा तेन लालितं शोभितं गेहं मंदिरं यस्य ॥८॥५४॥ इति पंचमेशफलानि॥५॥अथ षष्ठेशफलानि चंपकमालावृत्तैर्निर्दिशन् तस्यतावत् षष्ठभावस्थितिप्रयुक्तं फलमाह शत्रुभनाथ इति ज्ञातिविरोधः सहजः जन्मतः स्वभावत एव यानै



पंचमपोजननीगृहगश्चेन्मातृसुखंसुचिरंसभुनक्ति ॥ बुद्धियुतःसचिवोयुवदेहःसत्कमलाक्रमलालितगेहः॥८॥
॥ ५४ ॥ इतिपंचमभावः ॥ ५ ॥ शत्रुभनाथःशत्रुगृहेचेज्ज्ञातिविरोधःस्यात्सहजोस्य ॥ अन्यजनैःसत्सौहृदवृद्धिर्यानयुतःसद्धीनजनर्द्धिः ॥ १ ॥ ५५ ॥ शत्रुभनाथेसप्तमआयेवातनुगेहेसाहसवान्स्यात्॥पुत्रविहीनो मान्यउदारःसद्गुणकीर्तिद्रव्यसमेतः ॥ २ ॥ ५६ ॥शत्रुभनाथेरिःफमृतिस्थेरोगनिशांतंकोविदवैरी ॥ प्राणिविहिंसातत्परचित्तोथोपरदारासक्तमनस्कः ॥ ३ ॥५७ ॥ शत्रुभनाथेभाग्यगृहस्थेदारुशिलादेर्विक्रयकर्त्ता ॥ संव्यवहारेक्वापिचहानिःक्वापिचवृद्धिश्चंद्रकलावत् ॥ ४ ॥ ५८ ॥

र्वाहनैर्युतः सद्धीनजनर्द्धिःसती फलवती हीनजनेषुदीनेषु ऋद्धिः प्रभाव ऐश्वर्यं वा यस्य हीनजनपालक इत्यर्थः ॥ १ ॥ ५५ ॥ षष्ठेशस्य सप्तमलाभलग्नान्यतमस्थत्वफलमाह शत्रुभनाथ इति ॥ २ ॥ ५६ ॥ तस्याष्टमव्ययस्थितिफलमाह शत्रुभनाथ इति रोगनिशांतं रोगाणां गृहं निशांतपस्त्यसदनेत्यमरः कोविदानां पंडितानां वैरी प्रतिकूलः ॥ ३ ॥ ५७ ॥ तस्य भाग्यस्थत्वफलमाह शत्रुभनाथ



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

इति संव्यवहारे वाणिज्ये ॥ ४ ॥ ५८ ॥ तस्य दशमद्वितीयस्थत्वफलमाह शत्रुभेति साहसेन दंडेनयुक्तः विचारशीलत्वरहितः कर्मसु श्रुतिस्मृतिप्रणीतनित्यनैमित्तिककर्मसु निष्ठा आस्तिक्यप्रयुक्तश्रद्धाप्रीत्यादिस्तद्वान् नैकनिवासः नानास्थानस्थितिः तत्तद्देशाट नकर्त्ता वा प्रोक्तनिरुक्तः प्रकर्षेणउक्तम् अधीतं परिशीलितं निरुक्तं वेदाङ्गं येन यद्वा प्रोक्तानि सद्भिर्विद्वद्भिः स्वसंकेतकल्पितसिद्धपद घटितवाक्यानि निरुक्तानि बोधनसामर्थ्येन व्याख्यातानि स्फुटीकृतार्थानि येन स्पष्टमन्यत ॥ ५ ॥ ५९ ॥ तस्य तृतीयचतुर्थस्थत्व

शत्रुभनाथेव्योम्निधनेवासाहसयुक्तोवंश्यजनाग्र्यः ॥ कर्मसुनिष्ठावान्सुखयुक्तोनैकनिवासः प्रोक्तनिरुक्तः॥ ५ ॥ ५९ ॥ शत्रुभनाथेभ्रातरितुर्येवातिरुषास्याल्लोहितनेत्रः ॥ वापिशुनोद्वेषीचलचित्तोवित्तसमेतः क्वापिमनस्वी ॥ ६ ॥ ६० ॥ शत्रुभनाथेपंचमगेहेचंचलमित्रद्रव्यसुखाढ्यः ॥ प्रीत्यनुकम्पावानतिसौम्यःस्यान्निजकार्येऽसौनिपुणोपि ॥ ७ ॥ ६१ ॥ इतिषष्ठभावः॥ ६ ॥

फलमाह शत्रुभेति अतिरुषा लोहितनेत्रः अल्पेप्यपराधेतिक्रोधकर्त्ता क्वापि चलचित्तः क्वापि मनस्वी धैर्यधरः अविश्वसनीय इत्यर्थः ॥ ६ ॥ ६० ॥ तस्य पंचमस्थत्वफलं शत्रुभेति चंचलानि अस्थिराणि यानि मित्रद्रव्यसुखादीनि तैराढ्यः यद्वा चंचलमित्रद्रव्य सुखोपि अदृढास्थिरकृशमित्रद्रव्यसुखोपि सन्नाढ्य आढ्यत्वेन धनित्वेनैव व्यवह्रियमाणो भवतीत्यर्थः प्रीत्यनुकंपाभ्यां

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

सं०नि०
॥७८॥

प्रीतिप्रयुक्तानुकंपया वा युक्त इति ॥ ७ ॥ ६१ ॥ इति षष्ठेशफलानि ॥ ६ ॥ अथ सप्तमेशफलानि शालिनीवृत्तैः प्रकटयंस्तस्य तावल्लग्नसप्तमान्यतमस्थत्वप्रयुक्तफलमाह दाराधीशे इति लंपट आसक्तः साध्वसध्वंसकर्ता परेषामपि भयहर्त्ता स्वतस्तु निर्भयः एव एतत्फलमाह वार्तेति गांभीर्यभाववान् शौर्यगांभीर्ययोरन्योन्यं विरोधस्य लोकप्रसिद्धत्वात् ॥ १ ॥ ६२ ॥ तस्यषष्ठाष्टमस्थत्वफलमाह दाराधीशेइति वारस्त्रीभिः जनसमुदायस्त्रीभिर्वेश्याभिर्बहुभोग्यत्वात्सुरतोपचारकुशलाभिस्तद्धनस्य क्षयः

दाराधीशेलग्नगेकामगेवादारेष्वन्येषांनरोलंपटःस्यात ॥ धीरःपौरः साध्वसध्वंसकर्त्तावार्त्ताचित्तेकापि नैवस्थिरास्य ॥ १ ॥ ६२ ॥ दाराधीशेषष्ठगेमृत्युगेवारुग्णोनित्यंक्रोधयुक्तःस्मरार्त्तः ॥ सौख्यंस्वप्ने प्यस्यनस्यात्कथंचिद्वारस्त्रीभिर्बाधनस्यक्षयः स्यात् ॥ २ ॥ ६३ ॥ दाराधीशेवित्तगेभाग्यगेवानानायो षासंगमात्सौख्ययुक्तः ॥ सर्वारम्भीदीर्घसूत्रीचनित्यंचित्तंतस्यस्त्रीषुसक्तंनितांतम ॥ ३ ॥ ६४ ॥

स्यात यद्वा ताभिर्वा धनस्य पंचशरप्रयुक्तपीडनस्य क्षयः स्यात नतु साध्वीभिस्तासां कामोपचाराकुशलत्वादितिभावः ॥ २ ॥ ॥ ६३ ॥ तस्य धनभाग्यस्थत्वफलमाह दाराधीशे इति सर्वारंभी आरभ्यंते इत्यारंभाः कर्माणि तेन सर्वकर्मचिकीर्षाकुलहृदय इत्यर्थः दीर्घसूत्री दीर्घं सूत्रं व्यवस्था यस्य चिरक्रिय [illegible] करोतीत्यर्थः दीर्घसूत्र इतिपाठस्तूचितः ॥ ३ ॥ ६४ ॥

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

सटी०
सं० ६
॥७८॥

तस्य चतुर्थदशमस्थत्वफलमाह दाराधीशेइति दन्तवक्त्रामयेन तद्रोगेणार्त्तः पीडितः ॥ ४ ॥ ६५ ॥ तस्य तृतीयलाभस्थिति फलमाह दाराधीशइति अपत्यं संततिः कालदंष्ट्राविदीर्णं यमदंष्ट्राभिश्चर्वितं यमभक्षितमिति यावत् तत्संतानजीवनमसंभवीति भावः तस्य स्त्रियामन्येन जातः पुत्रो जीवेदपि परंतु न स्ववीर्यजातः अथैतद्दशयोगे जातस्य संततेर्दुर्लभत्वात्तदाशया विवाहएवानु चितो वंशच्छेदश्चस्यादतआह पुत्रप्राप्तिरिति मंत्राः देवकीसुतगोविंदेत्यादयः शारदातिलकादावुद्धृतानुष्ठानप्रकारः यन्त्राण्य

दाराधीशेतुर्यगेव्योमगेवापातिव्रत्योद्धासितातस्यभार्या ॥ धर्मात्मास्यात्सत्यवादीच धीमाँल्लोकेनूनं दन्तवक्त्रामयार्तः ॥ ४ ॥ ६५ ॥ दाराधीशेभ्रातृगेलाभगेवातस्यापत्यंकालदंष्ट्राविदीर्णम् ॥ जीवेत्कन्या कापिपुत्रोन्यजोवापुत्रप्राप्तिर्यंत्रमंत्रौषधाद्यैः ॥ ५ ॥ ६६ ॥ दाराधीशेद्वादशस्थेदरिद्रोद्रव्येसत्यप्येषदी नः कदर्यः ॥ भार्याचास्यस्तेनकन्यादरिद्रावस्त्राजीवीनीचसंगीस्वयंस्यात् ॥ ६ ॥ ६७ ॥

पि तत्रैवोदाहृत्य लिखितानि औषधानि चरकसुश्रुतादिचिकित्साशास्त्रादौ महामुनिपतंजल्यादिप्रतिपादितानि आदिपदाद न्ये धूपादयोपि तत्प्रतिरोधापहारकाः तथाच तस्य संततिरुपायसाध्या नतु सर्वथाऽसाध्यैवेति ॥ ५ ॥ ६६ ॥ तस्य द्वादशस्थान स्थितःफलमाह दाराधीशे इति दीनः अत्यंतलिप्सापरीतः कदर्यः सर्वथा धनवियोगासहिष्णुः तस्य भार्यापीदृश्येवेत्याह भार्या चेति वस्त्रक्रयविक्रयादिनाऽऽजीवनवान् नीचसंगी नीचकर्मकारिषु प्रीतिमान् ॥ ६ ॥ ६७ ॥

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

तस्य पंचमस्थानस्थितेः फलमाह दाराधीशेइति मनस्वी स्थिरबुद्धिः धैर्यवानितियावत् मानी समुन्नतचित्तः चंचन्मानवोदग्र
यायी चंचंतः प्रभावप्रतापशालिनो ये मानवास्तेभ्य उत्कर्षेणाग्रयायी अग्रेसरः तैः पूज्यइतियावत् हृष्टः प्रसन्नः सर्वथा सुखीत्यर्थः
मृष्टपुष्टप्रतिष्ठः मृष्टैरुत्तमैर्धीरपुरुषैः पुष्टाऽऽधिक्यमापादिता प्रतिष्ठा यस्य मृष्टा निर्दोषा पुष्टाचेति कर्मधारयो वा ॥ ७ ॥ ६८ ॥
इतिसप्तमेशफलानि ॥ ७ ॥ अथाष्टमभावेशफलानि द्रुतविलंबितवृत्तैर्निरूपयन् तावदष्टमेशस्याष्टमस्थानस्थत्वप्रयुक्तं फलमाह

दाराधीशःपंचमेचेन्मनस्वीमानीचंचन्मानवोदग्रयायी ॥ श्रीमाञ्छश्वत्सद्गुणैःसंयुतश्चनित्यंहृष्टोमृष्टपु
ष्टप्रतिष्ठः ॥७॥ ६८ ॥ इतिसप्तमभावः ॥ ७ ॥ निधनपेनिधनंसमुपाश्रितेभवतिचौर्यपरोगुरुनिंदकः ॥ खल
विदेवनकृत्परवंचकोयुवजनेनिरतास्यसदांगना ॥ १ ॥ ६९ ॥ निधनपेसततंतपसिस्थितेक्षपणकाद्यनुगो
ऽवरदारकः परवधूधनधर्मरुचिःस्वयंपरभवाशुभसन्ततिरंगता ॥ २ ॥ ७० ॥

निधनपेइति खलविदेवनकृत् सर्वथानिषिद्धद्यूतकर्त्ता दुर्योधनादिवत् अस्यांगना पतिव्यतिरिक्तेषु युवजनेष्वासक्तान्तःकर
णा ॥ १ ॥ ६९ ॥ तस्य नवमस्थानस्थत्वफलमाह निधनपइति क्षपणको नास्तिकविशेषः तन्मतानुसरणशीलः अवरदारकः कुत्सि
तदारवान् परकीयेषु वधूधनधर्मेषु रुचिरभिलाषः प्रीतिर्वायस्य परभवेति तस्य स्त्री परभवाऽशुभसंततिःपरपुरुषाज्जाताऽशुभासंत



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

तिर्यस्याः परगामिनीत्यर्थः ॥ २ ॥७०॥ तस्य चतुर्थदशमस्थत्वफलं निधनपे इति सुखगे चतुर्थगे नुखगे नुइतिवितर्के खगे दशमस्थे जननतो जातमात्रस्यैव उपांतकगती यमसमीपं प्राप्तौ मृतौ वाच्यावित्यर्थः तत्पित्रोर्दशामुक्त्वा तद्दशां दर्शयति स्वयमिति ईतयः अतिवृष्टिरनावृष्टिर्मूषकाः शलभाः शुकाः ॥ स्वचक्रं परचक्रंचेति सप्त तद्भिभीतिभाक् सदा वाणिज्यादौतत्प्रयुक्तभयग्रस्तचित्तः यद्वा ईतिः प्रवासस्तद्विशिष्टभयभाक् ॥ ३ ॥ ७१ ॥ तस्य पंचमलाभस्थत्वफलमाह निधनपइति किल अवश्यमेव सुकर्मणि

निधनपेनुखगेसुखगेपिवाविगतबंधुरसौपिशुनःकुधीः ॥ जननतोजननीजनकावुपांतकगतीस्वयमीतिवि
भीतिभाक् ॥३ ॥ ७१ ॥ निधनपेसुतगामिनिवायगेकिलकृतेपिसुकर्मणियाप्यता ॥ नकमलालभतेस्थिर
तांगृहेऽनृजुमतिःस्वयमस्थिरचेतनः ॥ ४ ॥ ७२ ॥ निधनपेरिपुगेव्ययगेपिवासततमामयबाधनयार्दितः ॥
भुजगतोयभवाहतिजव्यथाभवतिपूर्ववयस्यमिताध्रुवम् ॥ ५ ॥ ७३ ॥

वैदिकेयागादिरूपे कृतेपि याप्यता वैफल्यं योगवशात् किंचिदंगवैगुण्यादिनापि फलोत्पादनयोग्यताशक्त्यभावः अनृजुमतिः कुटिलधीः अतएव अस्थिरचेतनः अस्थिरबोधः प्रतिपज्ज्ञप्तिचेतनाइत्यमरोक्तेः ॥ ४ ॥ ७२ ॥ तस्य षष्ठव्ययस्थिति फलमाह निधनपेइति आमयबाधनया नानारोगाक्रमणप्रयुक्तपीडयाऽर्दितः भुजगतोयभवा भुजगाः सर्पादयो विषधराः तोयभवा मकरादयस्तदाहतिस्तत्कृतदंशनादिरूपोघातः तज्जन्या व्यथा दुःखं पूर्ववयसि बाल्ये यौवनेच ॥ ६ ॥ ७३ ॥

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

तस्य लग्नसप्तमस्थत्वफलं निधनपे इति रमणीद्वितीयं प्रथमपत्न्यां जीवन्त्यामेवापरस्याः संबंधः सामानाधिकरण्येन स्त्रीद्वयसबंधेच विषयासक्तिर्मोहमायादिप्रयुक्ता विपरीतक्रियाकारित्वं च नासंभावितम् अतएव गरुडध्वजे भगवति वासुदेवे विपरीतमतिः एतस्याविपरीतबुद्धेः फलमपि विपरीतमेव लोकशिक्षार्थं निर्दिशति व्रणरुजेति अतिक्रांतमर्यादविषयोपभोगनिमित्तकोपदंशादिविकृतरुधिरादिहेतुकव्रणशीर्णचर्मस्रवन्मज्जामेदस्त्वादिना परिपीडिता दुष्टा भ्रष्टा तनुः शरीरं यस्य ॥ ६ ॥ ७४ ॥ तस्य द्वितीयतृती

निधनपेमदगेतनुगेथवाभवतिवैरमणीद्वितयंनृणाम् ॥ स्वयमनिष्टमतिर्गरुडध्वजेव्रणरुजापरिपीडितदुस्तनुः ॥६॥७४॥ निधनपेधनगेथतृतीयगेभुजपराक्रमवीर्यविवर्जितः ॥ द्रविणमस्यभवेत्कृशतांगतंनचकथंचननष्टधनाप्तिभाक् ॥७॥ ७५ ॥ इत्यष्टमभावेशफलम् ॥ ८ ॥ भाग्यगृहेशेभाग्यभपेस्याद्धनधान्योपेतगृहः ॥ सोदरसम्पत्सौख्ययुतःकान्तिसमेतःसाधनभाक् ॥१॥ ७६ ॥ भाग्यपतौतुर्याम्बरगेसैन्यपतिर्मंत्रीसुकृती ॥ क्रोधविहीनःसाहसकृत्कीर्त्यनुभूत्युद्भूतसुखः ॥ २ ॥ ७७ ॥

यस्थत्वप्रयुक्तफलमाह निधनपे इति स्पष्टम् ॥७॥ ७५ ॥ इत्यष्टमभावेशफलानि ॥ ८ ॥ अथ नवमभावेशफलानि बृहतीवृत्तविशेषेभमसात्मकगणत्रयघटितैर्गाथावृत्तैरुपविंशंस्तावन्नवमस्थत्वप्रयुक्तफलं स्पष्टयति भाग्यगृहेशे इति स्पष्टोर्थः ॥ १ ॥ ७६ ॥ तस्य चतुर्थदशमस्थत्वफलमाह भाग्यपताविति कीर्त्यनुभूत्युद्भूतसुखः कीर्तेः शोभनस्यासमुद्रस्य यशसः अनुभूतिः प्रसिद्धिरु





CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

द्भूतं तेन उत्कर्षेण भूतं जातं सुखं यस्य ॥ २ ॥ ७७ ॥ तस्य लाभपंचमस्थानस्थत्वफलं भाग्यभपे इति सद्धीसहितः सद्धर्मकर्म प्रयोजकबुद्ध्यासहितः ॥ ३ ॥ ७८ ॥ तस्य द्वादशषष्ठाष्टमस्थत्वफलमाह भाग्यभप इति मातुलस्य सौख्यं मातुलितं मातुलजा तमेव जातार्थे इतच् नतु स्वानुभूतं यद्वा तत्सुखं मातुलितं मया लक्ष्म्या धनेन तुलितं क्रीतं धनं विना तस्य मातुलास्तं सुखिनं विधा तुं न प्रभवंति धनलुब्धा मातुला इतिभावः सज्येष्ठसहोत्थस्य व्याधेर्दुःखस्य अवधिः ततएव ज्येष्ठो दुःखीजात इत्यर्थः ॥ ४ ॥ ७९ ॥

भाग्यभपेलाभात्मजगे भाग्ययुतोमानीसुभगः ॥ भक्तिरतःश्रीमान्सुकृतीसद्गुणवान्सद्धीसहितः ॥ ३ ॥ ॥ ७८ ॥ भाग्यभपेंत्यार्यष्टमगेभाग्यविहीनःस्यात्पुरुषः ॥ मातुलसौख्यंमातुलितंज्येष्ठसहोत्थव्या ध्यवधिः ॥ ४ ॥ ७९ ॥ भाग्यभपेकल्पस्मरगेकीर्त्तिसमेतःसद्गुणवान् ॥ यस्यचिकीर्षास्यात्रभवेत्तत्क चनेयात्सिद्धिमपि ॥ ५ ॥ ८० ॥ भाग्यभपेभ्रातृस्वगतेभाग्यविधानेनित्यरतः ॥ सद्गुणवान्कामी धनवान्कोविदइष्टार्थैः सकलैः ॥ ६ ॥ ८१ ॥

तस्य लग्नसप्तमस्थत्वफलं भाग्यभप इति कल्पस्वविक्रमगृहप्रतिभाक्षतानि चित्तोत्थरंध्रगुरुमानभवव्ययानीत्याचार्योक्तेः कल्पशब्देनात्र लग्नमुच्यते यस्यकार्यस्य चिकीर्षाऽस्य पुरुषस्य भवेत् सा इच्छा क्वचन क्वचित् सिद्धिमपीयात् विषयसिद्धाविच्छा निवृत्तेरितिन्यायात् तेन क्वचिदीप्सितवस्तुलाभोपीति ॥ ५ ॥ ८० ॥ तस्यद्वितीयतृतीयस्थितिफलमाह भाग्यभप इति भ्रातृ


CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

स्वगते तृतीयद्वितीयगते भाग्यविधाने भाग्योदयार्थं नित्यरततत्परःसकलैः इष्टार्थः साधितार्थः सकलाहृत इत्यर्थः ॥ ६ ॥ ८१ ॥ इति नवमभावेशफलानि ॥ ९ ॥ अथदशमभावेशफलानि स्त्रग्विणीवृत्तैः कीर्त्तयन् तस्य तावद्दशमचतुर्थान्यतमस्थानस्थितिफलमाह व्योमग इति केसरीव सिंहइव उद्भटः निर्भयः सत्यसंधः सत्यप्रतिज्ञः अंगीकृता परित्यागकर्ता निर्जरप्रष्ठेत्यादि निर्जराः देवाः प्रष्ठाः सत्प्रतिष्ठिताग्रेसमः पुरोगाग्रेसरप्रष्ठेतिकोशात् विद्वज्जनाश्च तत्त्वविदः तेषां सर्वेषां पूजासु तत्परः स्यादित्यर्थः ॥ १ ॥ ८२ ॥

इतिनवमेशफलम् ॥ ९ ॥ व्योमगेव्योमभेशेथपातालगेज्ञानवान्सद्गुणीकेशरीवोद्भटः ॥ धर्मशीलःसदा सत्यसन्धोनरोनिर्जरप्रष्ठविद्वज्जनेज्यापरः ॥१॥ ८२ ॥ व्योमभेशेसुतस्थेऽथवावाप्तिगेसन्ततिद्रव्यसम्पत्समृद्ध्यार्जितः ॥ इन्दिराछन्दिवन्दारुसन्मन्दिरः सत्यवादीसुखीहृष्टचित्तोभवेत ॥२॥ ८३ ॥ व्योमभेशे व्ययारातिरन्ध्रस्थितेशत्रुभिर्वारुजासर्वदापीडितः ॥ प्राज्यचातुर्य्यसंपन्नमुख्योप्यसौस्यात्कदाचित्कथं चिन्नचानन्दितः ३ ॥ ८४ ॥

तस्यपंचमलाभस्थत्वफलमाह व्योमभेश इति इन्दिराच्छंदीती इन्दिरा लक्ष्मीः तस्यामेवच्छन्द आशयोऽभिप्रायो वा येषां ते धनार्थिनः दिव्यशोभालिप्सवो वा ईदृशा ये वंदारवः वंदारुरभिवादके इति कोशात् तैःसद्युक्तं राजमानं मंदिरं यस्य हृष्टचित्तः तत एव प्रसन्नचित्तः स्यादित्यर्थः ॥ २ ॥ ८३ ॥ तस्य द्वादशषष्ठाष्टमस्थत्वफलमाह व्योमभेश इति प्राज्यचातुर्येति प्राज्यमधिकं निर



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

तिशयं यच्चातुर्यं विशदप्रज्ञत्वंतेन संपन्नेषु युक्तेषु मुख्यः प्रधानोपि ऊहापोहकुशलतया सर्वक्रियानिपुणोपि कदाचित् कस्मिन्नपि काले कथंचित्केनापि प्रकारेण नचानंदितः सर्वदा चिन्ताशोकादिग्रस्त एवस्यात् सुखसामग्र्यां सत्यामपि सुखाभाव इत्यर्थः ॥ ३ ॥ ॥ ८४ ॥ तस्य जन्मलग्नस्थत्वप्रयुक्तं फलं निरूपयति व्योमगेहाधिपइति शैशवे बाल्ये दुःखी आमयनिमित्तकपीडा च परस्तात् पश्चि

व्योमगेहाधिपेजन्मलग्नस्थितेसत्कवित्वादिचंचद्गुणैःसंयुतः ॥ आमयैरार्दितोदुःखितःशैशवेथार्थसिद्धिःपर स्तात्सुखोदग्रताः ॥४॥ ८५ ॥ व्योमभेशस्मरभ्रातृवित्तास्थितेलब्धवर्णोजनःस्यान्मनस्वीतथा ॥ सत्यधर्म प्रतिष्ठावरिष्ठो गुणीलोकविख्यातकीर्तिःकृपासागरः ॥५ ॥ ८६ ॥

मावस्थायां सुखोदग्रता अधिकसुखोदय इति ॥४॥८५॥ दशमेशस्य सप्तमतृतीयद्वितीयस्थानस्थितेः फलमाह व्योमभेशे इति लब्धव र्णो जनः स्यात् लब्धवर्णो विचक्षण इतिकोशात् सकलहृदयगताशयाभिज्ञः मनस्वी धीरतरः सत्यधर्मप्रतिष्ठया सत्यधर्मयोरुत्तरोत्तरं दृढतरोपचयेन वरिष्ठः श्रेष्ठः स्पष्टमन्यत् ॥ ५ ॥ ८६ ॥

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

तस्य भाग्यभावस्थितिप्रयुक्तं फलं विशदयति व्योमभाधीश्वरे इति दशमेश्वरे नवमस्थानस्थिते पुरुषः भाग्यसौभाग्यसौजन्य सौधः भाग्यं नियतिरैश्वर्यम् अनुमितं प्राग्भवीयं प्रारब्धापरनामकं सत्कर्म सौभाग्यम् अनवरतलोकोत्तरप्रतिष्ठा संपत्तिः सौजन्यं सर्वथा निर्व्याजपरहितकारित्वं द्वेषादिराहित्यंच तेषां सौध आश्रयः सदनमित्यर्थः सौधोऽस्त्रीराजसदनमिति कोशात् परंतु क्वचि त् क्वचित्तस्य भाग्योदये चिंताविचारोपि असिद्धे वस्तुनि आकांक्षायाः सिद्धांतसंमतत्वात् ननु मनसैवोपायोपेयभावकार्याकार्यादि संशयो निरसनीयः किमुद्योगादिचिंतयातआह मानसमिति मानसं केवलमन्तःकरणं व्यवस्थासु मर्यादासु तन्नियामकनिमित्त

व्योमभाधीश्वरेभाग्यभावंगतेभाग्यसौभाग्यसौजन्यसौधोनरः ॥ किंतुचिन्तापिभाग्योदयेस्यात्क्वचिन्मा नसंनाव्यवस्थाव्यवस्थाकरम् ॥६॥८७॥ इतिदशमेशफलम् ॥ १०॥ लाभेशोयदिसमवाप्तिगेहयातोवाग्मी स्यात्पुरुषवरःसुखीसमृद्धः ॥ पाण्डित्यंसकलविधंचसत्कवित्वंसत्प्रीत्यैप्रतिदिनमस्यवृद्धिमेति ॥१॥ ८८ ॥

ज्ञानाभावात् निश्चायकं न भवतीत्यर्थः ॥ ६ ॥ ८७ ॥ इति दशमभावेशफलानि ॥ १० ॥ अथ लाभेशफलानि प्रहर्षिणीवृत्तैः प्रकटयन् तावत्तस्य लाभभावस्थत्वप्रयुक्तफलं निगदति लाभेशइति वाग्मी विद्वत्सदसि प्रशंसनीयवाक् समृद्धः ऐश्वर्यवान् पाण्डित्यं सामा न्यविशेषरूपाभ्यां शास्त्रीयपदार्थविषयकयथार्थज्ञानं विचारप्रयोजकाऽऽपातरूपा बुद्धिरितियावत् शास्त्र एव नास्य पांडित्यं किंतु लोकेपीत्याह सकलविधमिति सत्कवित्वं पदवाक्यार्थगुणालंकारदोषज्ञता काव्यज्ञत्वमित्यर्थः तददोषौ शब्दार्थौ स गुण

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

वानलंकृती पुनः क्वापीति काव्यलक्षणोक्तेः यद्वा पांडित्यं सकलतत्तन्मताभिज्ञत्वं सत्कवित्वं ब्रह्मदर्शित्वमिति ॥ १ ॥ ८८ ॥ तस्य व्ययस्थत्वप्रयुक्तफलमाह रिष्फस्थइति स्मरोत्थभावैः रतिहास्यादिरूपस्थायिभावैः निर्वेदादिभिस्त्रयस्त्रिंशन्मितैर्व्यभिचारिभावैश्चोन्मज्जननिमज्जनादिमत्त्वादस्थायिभीरसोत्पत्त्याद्यनुकूलैस्तैः कांताभिः रमणपरः क्रीडातत्परः अत्रहेतुः कामार्त्तइति क्षण

रिष्फस्थोयदिसमवाप्तिगेहनाथःसंसर्गोयवनजनैस्तदासदास्यात् ॥ कान्ताभीरमणपरः स्मरोत्थभावैः कामार्त्तः क्षणधिषणोतिलंपटश्च ॥२ ॥ ८९ ॥ लग्नस्थोयदिसमवाप्तिभावनाथः स्याद्वक्ताधनसहितःकुतूहलात्मा ॥ सर्वत्राविषममतिःप्रसन्नचेताविख्यातः खलवियुतश्चसात्त्विकात्मा ॥ ३ ॥ ९० ॥ लाभेशेसहजगतेथवित्तयातेतीर्थेषुप्रगुणधिया कृतार्थभूतः ॥ सत्कार्येष्वपि कुशलोतिलोलचित्तः स्वल्पस्वोऽनवरतशूलरोगदुःखी ॥ ४ ॥ ९१ ॥

धिषणः चलमतिः अतिलम्पटः भोग्यविषयासक्तमनस्कः ॥ २ ॥ ८९ ॥ तस्य लग्नस्थत्वप्रयुक्तफलमाह लग्नस्थ इति कुतूहलेषु आत्मा चित्तं यस्य कौतुकप्रियोपि लोकानामानंदजनकतयातत्स्वरूप एव प्रतीयते सर्वत्र शत्रुमित्रादौ समधीः प्रतिष्ठितप्रज्ञात्वात् तस्यप्रज्ञाप्रतिष्ठितेति भगवदुक्तेः खलवियुतः दुःसंगरहितः सात्त्विकात्मा सत्त्वप्रधानः विशेषणद्वयेन प्रज्ञाप्रतिष्ठा फलमुक्तम् ॥ ३ ॥ ९० ॥ तस्य तृतीयद्वितीयस्थानस्थितिफलं लाभेशे इति तीर्थेषु पावनेषु प्रगुणधियादृढबुद्ध्या विश्वासवत्येत्यर्थः

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

अतिलोलचित्तः अत्यंतचलचित्तः अल्पस्वः अल्पधनः अनवरतं नित्यम् अस्थिवातप्रयुक्तशूलरोगेण दुःखी पीडितः ॥ ४ ॥ ९१ ॥ तस्य चतुर्थपंचमस्थितिफलं लाभेशइति शुभपुमपत्यवीर्यसंपत्संयुक्तः शुभेन हितेन पुमपत्येन पुत्रादिना वीर्येण बलेन संपदा च नानाविधया संयुक्तः शुभफलसिद्धिभूषितः शुभस्य पूर्वकर्मणः फलभूता या सिद्धिः प्रतिष्ठैश्वर्यादिरूपा तया भूषितः शोभितः शुभप्रारब्धानुमापकसिद्धिसौभाग्यैश्वर्यादियुक्त इत्यर्थः ॥ ५ ॥ ९२ ॥ तस्यषष्ठस्थत्वफलमाह लाभेशेइति एडो बधिरः स्यादे

लाभेशेसुखसुतभावगामिनिस्यान्नानार्थोंबहुविधसौख्यभाङ्मनुष्यः ॥ धर्मात्माशुभपुमपत्यवीर्यसं पत्संयुक्तः शुभफलसिद्धिभूषितश्च ॥ ५ ॥ ९२ ॥ लाभेशेरिपुभवनस्थिते नरोसौस्यादेडोविविधरुजा र्दितः सदैव ॥ सार्वात्म्येनचसुखवानपिप्रवासी गच्छेदस्यतुपरसेवयैवकालः ६ ॥ ९३ ॥ लाभेशेम दगृहगेथरंध्रयातेनोजीवेदिहवनितानरस्यकापि ॥ कामार्त्तोधनसहितः प्रकृत्युदारः कौलीनेप्यनभि मतव्ययोऽप्रबुद्धः ॥७॥ ९४ ॥

डेबधिरः कुब्जेगडुल इतिकोशात् सार्वात्म्येन सुखवानपि प्रवासनिरतः यावज्जीवं पराधीनवृत्तिः ॥ ६ ॥ ९३ ॥ तस्य सप्तमाष्टमस्थान स्थितिफलं लाभेशइति प्रकृत्युदारः प्रकृत्याउदारः प्रकृत्यादिभ्य उपसंख्यानमिति तृतीया प्रकृत्याचारुरितिवत् उदारस्वभाव इत्य र्थः कौलीन्येपि सत्कुलोद्भूतत्वेपि यद्वा कौलीने लोकवादेपि लोकेषु निंदांकुर्वत्स्वपि अनभिमतव्ययः असद्बहुव्ययकर्त्ता अत्रहेतुः



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

यतः अप्रबुद्धः विचारेण ज्ञानेन च रहितः ॥ ७॥ ९४॥ तस्यनवमदशमस्थानस्थितिफलमाह लाभेशेइति कृतिकुशलः कृतिसाध्येषु कर्मसु कुशलः तत्तदितिकर्त्तव्यतासुनिपुणः अपरोपकर्त्ता अपरेषु स्वकीयवदुपकर्त्ता यद्वा अपगतोरोपोयस्मात् प्रमितकर्त्ता यथार्थ कर्मकर्त्तेति परोपकर्त्तेतिपाठे तु स्पष्टोर्थः ॥ ८॥ ९५ ॥ इत्येकादशेशफलानि॥ ११॥अथ द्वादशभावेशफलमार्यावृत्तैरुदाहरन् तावत्तस्य

लाभेशेनवमगतेथवांबरस्थेभूपालैरपिपरिपूजितांघ्रिपद्मः ॥ धर्मात्माकृतिकुशलश्चसत्यवादीविख्यातो धनसहितोऽपरोपकर्ता ॥ ८ ॥ ९५ ॥ इतिलाभेशफलम् ॥ ११ ॥ व्ययभावपतौव्ययगेरिपुगेवापापकृद्भवे न्मनुजः ॥ मातृविरोधीक्रोधीसन्ततिदुःखीपराबलाभोगी ॥ १ ॥ ९६ ॥ व्ययभावपतौमदगेतनुगेवादुर्बलो तिकफरोगी ॥ धनविद्याविधुरोसौभार्यासुखवर्जितोनित्यम् ॥ २ ॥ ९७ ॥ व्ययनाथेधनरन्ध्रस्थितेऽच्युतेऽ स्याच्युताभक्तिः ॥ संपन्नः सकलगुणैःप्रियवादीधार्मिकोभवेत्पुरुषः ॥३ ॥ ९८ ॥ व्ययनाथेधर्मस्थे सहज स्थेवाशरीरपोषणकृत् ॥ नित्यंद्वेष्टिज्येष्ठान्प्रजांचभार्यांगुरूंश्चापि ॥ ४ ॥ ९९ ॥

व्ययषष्ठान्यतमस्थानस्थितिफलं व्याहरति व्ययभावपताविति संततिदुःखी संततिलिप्सया दुःखवान् तत्रहेतुः पराबलाभोगी ति ॥१॥९६॥ तस्यलग्नसप्तमस्थत्वफलमाह व्ययेति ॥२ ॥ ९७॥ तस्यद्वितीयाष्टमस्थत्वफलं व्ययेति अच्युते श्रीकृष्णे परमात्मनि अस्यपुरुषस्याच्युता दृढाफलवती भक्तिः ॥ ३॥९८॥ तस्य नवमतृतीयस्थत्वफलमाह व्ययेति स्वशरीरं ज्येष्ठादिविरोधेनापि पुष्णा

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

ति ॥४॥९९॥ तस्य चतुर्थदशमस्थत्वफलं व्ययेति स्पष्टम् ॥५॥१००॥ तस्य पंचमैकादशस्थत्वफलमाह व्ययनाथेइति दत्तपुत्राद्यै रपत्यव्यवहारवान्मणिमुक्तादिव्यापारद्वारास्वकुटुंबनिर्वाहकश्चेत्यर्थः ॥६॥१०१॥ अथोक्तफलोपदेशविधौ न्यूनतां परिहरन् तत्र विशेषं निरूपयति बलाबलविवेकतइति कोविदैर्विद्वद्भिः ग्रहाणां भावानां तद्गतवर्गाणांच बलाबलविवेकतः अयं बलवान् पूर्वोक्तं फलं यथावद्दातुं समर्थः अयंच निर्बलस्तद्दातुमसमर्थः इति विवेकं कृत्वा तेषां सर्वेषां शुभाशुभात्मकम् इह शास्त्रे यदुदितं निरूपितं तद्वक्त

व्ययनाथेसुखगेवाखेवासुततातमातृसुखहानिः ॥ परगृहवाणिज्याद्यैः क्षेत्राद्यैश्चक्वचिज्जीवत् ॥५॥ १००॥

व्ययनाथेसुतभेवालाभेवापत्यसौख्यविधुरः स्यात् ॥ दत्तक्रीतसुताद्यैर्मणिमुक्ताद्यैश्च निर्वाही ॥६॥१०१॥

इतिव्ययभवेशफलानि ॥ १२ ॥ बलाबलविवेकतः फलमिहोदितंकोविदैः कुजोनिजचतुर्थभूफलविशेषदोवक्रगः ॥ स्वतःसुतफलंगुरुःसुखफलंबुधःस्त्रीफलंसितोनियतिजंशनिर्धनफलंविधुर्वैपुवे ॥ १ ॥ १०२ ॥

व्यं नत्वविवेकत इति सर्वसाधारणमुक्त्वा प्रतिज्ञातं विशेषमाह कुजइति वक्रगः वक्रतामनृजुत्वं प्राप्तः सन् निजचतुर्थभूफलविशेषदः स्वावधिकचतुर्थस्थानसंबधिफलविशेषं ददाति तथा गुरोरप्याह स्वतः इति स्वावधिकपंचमभावफलं निरपेक्षं वा तथाविधमेव गुरुर्ददाति एवं बुधस्याह सुखेति सुखरूपं स्वतश्चतुर्थफलं वा पूर्ववत् शुक्रस्याह स्त्रीफलमिति स्वावधिकसप्तमस्थानफलं स्त्रीसंबंध्येव वा पूर्ववत् शनेराह नियतिजमिति भाग्यस्त्री नियतिर्विधिरिति कोशात् नियतिभाग्यं तथाच शनिरपि स्वावधिक



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

नवमस्थानफलं भाग्यसंबंधि वा प्राग्वद्ददाति चंद्रस्याह धनेति स्वावधिकधनस्थानफलं धनसंबंधि वा वैषुवे समरात्रिंदिवे काले विषुवद्विषुवंचतदित्युक्तेयस्मिन् वृत्ते एकविंशतिः सहस्राणि षट्शतानि चासवोंकितास्तस्मिन् समवृत्ते यदाचंद्रः प्रविशति तदैव चंद्रस्योक्तं फलं ज्ञेयमिति केचित्तु सर्वेषामेव समवृत्ते प्रविष्टानामेवं फलं वाच्यमित्याहुः ॥ १ ॥ १०२ ॥ तत्र साधारण्येन तत्तत्फलनिरूपणयुक्तिं दर्शयति राश्यादाविति राशेरादौवर्त्तमाना ग्रहाः शुभयोगाद्ये संति शुभैरशुभैर्वायोगे सति आदिपदाद्दृष्ट्यादिसंबंधेच

राश्यादौशुभयोगाद्येफलंयच्छन्तिखेचराः ॥ विमृश्यसर्ववक्तव्यंसंहितोक्तविधाश्रितम् ॥ २ ॥ १०३ ॥ निजाग्रजातात्मजघासिरामकृतेहिसंकेतनिधौकृतेऽस्मिन् ॥ ज्योतिर्विदारामदयालुनाम्नासांहित्यसंकेतइतः समाप्तिम् ॥ ३ ॥ १०४ ॥ इतिषष्ठःसंकेतःसमाप्तः ॥ ६ ॥

सति शुभाशुभं फलं यच्छंति नतु राश्यंते वस्तुतस्तु शुभयोगाद्ये ग्रहाः फलं यच्छंति ते राशेरादावेवचेत् अशुभयोगात्तुनैवं तत्र संहितोक्तविधाश्रितं लोमशगर्गाचार्यादिप्रणीतासु संहितासु उक्ता विधाः प्रकारास्तदाश्रितं तदनुसारेणबलाबलादिकं विमृश्य सर्वं धीमद्भिर्वक्तव्यमित्यर्थः ॥ २ ॥ १०३ ॥ संकेतोपसंहारश्लोकं पठति निजाग्रजातेति अत्रस्थित एतत्फलदाने प्रभवतीति

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

प्रत्यायनोपयोगिबोधरूपः सांहित्यसंकेतः तत्तत्संहितास्ववगततत्तद्विशेषकं समाप्तिमितः प्राप्तः ॥ ३ ॥ १०४ ॥ इतिसंकेत निधिव्याख्यायां षष्ठः संकेतः ॥ ६ ॥ अथगुरुपरंपरापरिप्राप्तःजिज्ञासितशुभाशुभत्वप्रकारकतत्तत्पदार्थविषयकज्ञानाय गोपनीय पदार्थज्ञापकमपि सप्तमं संकेतं निरूपयितुं प्रतिजानीते अथेति स्वसंकेतः गुरुपरंपरापरिप्राप्तः नतुशास्त्रेषु स्फुटतया प्रतीतः अतएव गोपनीय इत्यर्थसिद्धं तस्यविशेषः सामान्येन प्रतीयमानस्य शिष्यैर्भक्त्यावाप्तस्यापि प्रतिष्ठादीष्टसाधनत्वा भावात् तस्य स्वसंकेतविशेषस्ययोलेश एकदेशः ततस्तेन तद्बोधकवाक्योक्तयुक्त्याखगस्य बलं वीक्ष्य बलानुसारेण फलं कल्प्यते सदसत्तत्फलकथनप्रकारो निरूप्यते इत्यर्थः ॥ तत्रतत्प्रतिपत्त्युपयोगिनीं प्रथमभूमिकां दर्शयति पुरेति पुरा प्रथमं द्वादशभा

अथस्वसंकेतविशेपलेशतःफलंबलंवीक्ष्यखगस्यकल्प्यते ॥ पुराधुराद्वादशभावभाषिताविचारणीयैवसम
स्तवस्तुनः ॥ १ ॥ तानवंवर्णचिह्नेवयोजीवनंजातिशीलेसुखाद्यंतनोश्चिन्तयेत् ॥ द्रव्यरत्नस्वधात्वादिमित्रं
धनात्साहसभ्रातृभृत्याध्वपित्र्यंकृते ॥ २ ॥

वेषु वक्ष्यमाणा या धरा भूमिर्मार्गो भाषिता पूर्वाचार्यैः पुरेतिपदेन पूर्वमपि प्रकरणेषु सूचिता विचार्येत्युक्तं सा समस्तवस्तुनः तत्त द्भावनिरूपितसूचितवस्तुसंबंधिनी विचारणीया एवेत्यवश्यमित्यर्थः तथाच तत्तद्देशकालभाववस्त्वादिसकलविचारं विधाय बलानुसारेण फलं वाच्यमित्यर्थः ॥ १॥ द्वादशभावेषु चिंतनीयपदार्थान् संक्षेपेणैव चतुर्भिः श्लोकैर्निरूपयति तानवमिति तानवं श



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

रीरसंबंधि मातृभुक्तधात्र्यादिप्रयुक्तविकृतिव्रणादिरूपं वातपित्ताद्यात्मकं वा वर्णः शुक्लगौरादिः चिह्नं तिलमशकादि वयः पर्यंता वस्थाविशेषः जीवनं जीवनोपायः प्राणादिमत्त्वमितिकेचित् जातिर्ब्राह्मणत्वादिः उत्पत्तिर्वा पित्रादिज्ञातिर्वा शीलं सद्वृत्तं स्वभावो वा सुखदुःखे तनोर्लग्नादेतत्सर्वमचिन्तयेत् धनाद्द्वितीयभावात् द्रव्यं गृहादिरत्नं वज्रादितद्घटितभूषणादि वा स्वं धनं सुवर्णरजतमुद्राद्यात्मकं धातुर्भूमित उद्धृतं मृत्पर्यंतं जीवनोपायव्यापारावरुद्धाद्यात्मकंच तत्रादिपदात्तत्संबंधिमानादि चक्षुर्वागादिच मित्रं सहायादि तृतीयभावादाह साहसं युद्धादिदंडकलहादिच भ्राता सहोदरादिः सजातीयादिर्वा भृत्या

प्राक्स्वभूक्षेत्रगेहप्रसूकंसुखात् मंत्रविद्याधनोपायगर्भान्सुतात ॥
वंदमान्द्यारिभीमातुलाद्यंरिपोःस्त्रीहृताध्वच्युतामर्षविद्द्त्वंमदात् ॥ ३ ॥

वेतनवंतः अध्वा मार्गः पित्र्यं पितृसंबन्धिकृतेः यत्नरूपात् पराक्रमात् तृतीयभावात् ॥ २ ॥ चतुर्थाद्विचार्यमाह प्रागिति प्राक्स्वं स्वपूर्वेषां धनादिभूक्षेत्रगेहादिप्रसिद्धं प्रसूकं मातृसंबंधिसुखं सुखात् चतुर्थात् पंचमादाह मंत्रेति मंत्रः रहसिकर्त्तव्यावधारणं वेदांशेगुप्तवादेचेतिहैमोक्तेः लोकशास्त्रोभयसिद्धा विद्याधनोपायगर्भौ प्रसिद्धौ सुतात् पंचमादेतान् ब्रूयात् षष्ठाद्वक्त व्यानाह बंधो बंधनं बन्धइतिपाठे दैन्यमस्वातंत्र्यं वा बंदः मातुलाद्यमित्यादिपदान्मातुलपुत्रस्त्रीप्रभृति एतान् रिपोः षष्ठाद्वदेत् सप्त माच्चिंतनीयानाह स्त्रीहृतेति स्त्री जायादि हृतं अपहृतं बलात्कारेण चौर्यादिना वा अध्वच्युतं मार्गपतितम् अमर्षः कोपोऽसहिष्णु

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

त्वं वा विद्त्वं वाणिज्यं व्यापारादि मदात् सप्तमात् ॥ ३ ॥ अष्टमाद्वक्तव्यानाह दुर्गेति दुर्गं दुर्गमस्थानं कोटादिरूपं नष्टं नष्टध नादिकुटुंबं स्त्रीपुत्रादि तत्संबंध्यादिच मृतस्वकं मृतधनं आधिर्मानसीव्यथा अरिसंक्षयाः अरिभिररीणां वा संक्षयाः एतत्सर्वं मृत्यु तोऽष्टमाद्वदेत् नवमाद्वक्तव्यानाह अथेति शुभं सुखं मंगल्यादिच आप्युपायो लाभोपायादिः रतिः प्रीत्यादिः इष्टं यज्ञदानादि ईप्सि तं वा दिष्टं दैवं भाग्यं सृतीर्मार्गान् शुभान्नवमादेतद्ब्रूयात् दशमादाह पुण्येति पुण्यं परलोके सुखादिजनकं धर्मादिपण्यं विक्रेयं द्रव्यं

दुर्ग्गनष्टकुटुम्बयुद्धमृतस्वकाध्यरिसंक्षयान्मृत्युतोथशुभास्युपायरतीष्टदिष्टसृतीःशुभात् ॥ पुण्यपण्यमह र्द्धिपैतृकमम्बरात्सहमुद्रयाऽर्घेश्वरस्वसुतासहत्पशुसुतप्रयोजनमायतः ॥४॥ पण्डितोव्ययतोव्यथाव्ययैवैरि रोधसुखंवदेद्युज्यतेत्रपुरोक्तभावविचारणापिसधारणा ॥ भावयुग्ममिहोभयत्रतनोःस्मरादपितद्द्वयंनीचग स्यनिजोच्चवीक्षणतःफलंसकलंध्रुवम् ॥ ५ ॥

इष्टादिगतं महर्द्धिर्महदैश्वर्यं पैतृकं पितृसंबंधि प्रतिष्ठाधनादि सहमुद्रया मुद्रातदीयत्वज्ञापकचिह्नंविशेषस्तेनसह एते अंबराद्दशमा द्वाच्या लाभादाह अर्घेति अर्घोवस्तुमूल्यं ईश्वरो राजा स्वं धनं यद्वा ईश्वरस्वं राजधनं सुतादयः प्रसिद्धाः सत्प्रयोजनं शुभफलं एते आ यतो लाभात् ॥ ४ ॥ व्ययाद्वक्तव्यानाह पंडितइति व्ययतः द्वादशाद्भावात् वैरिकृतोरोधः बंधनादि एतत्सर्वं विचार्य व्ययाद्वदेत् विचारे उपकारकमाह अत्रेति अत्र भावानां फलनिरूपणावसरे सधारणा पुरोक्तभावविचारणापि युज्यते इत्यन्वयः पुरा पूर्वं चतुर्थषष्ठसंकेता





CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

दावुक्ता प्रदर्शिता या विचारणा प्रमाणैस्तत्तत्पदार्थपरीक्षा सा सधारणा धारणा चित्तस्यस्थितिःदेशबंधश्चित्तस्य धारणेत्युक्ता एकाग्र तेतियावत् तद्विशिष्टा एवमुक्तभावविचारणापि अत्र फलकथने युज्यते सहायी भवतीत्यर्थः अत्रविचारे विशेषमाह भावयुग्ममि ति उभयत्र यो भावो विचारणीयस्ततःपार्श्वद्वयगतौ यौ भावौ द्विद्वादशात्मकौ तावपि परीक्षणीयौ उभयत्रेत्यस्योभयतइत्यर्थः यस्मा द्भावादुभयतः शुभौतस्यशुभफलं यस्मादशुभौ तस्याशुभं संकरे फलसंकरः वस्तुतो यस्मादुभयत्र ग्रहाभावस्तस्य शुभमेवा धिकं वाच्यम् एवंभावद्वयं सर्वेषुभावेषुविचार्यं मुख्यमुदाहरति तनोरिति भावेषुमुख्यमवश्यं द्रष्टव्यसंकेतमाह नीचगस्येति नीचग

किन्तुयद्भावपोनीचगःखेचरस्तत्फलंयच्छतीहाशुभंनिश्चयात् ॥ तुङ्गगोनीचयुक्तोपिमध्यंफलंनीचगस्तुंग गाढ्योपितादृङ्मतः ॥ ८ ॥ पूर्णदृष्ट्यातुयद्भावदर्शीग्रहोलग्नतोयत्रराशिस्तदीयोभवेत् ॥ तन्मिताब्देफलं तस्यवाच्यंयथाङ्गाद्वयान्तंसमाद्वादशाग्रेतथा ॥ ७ ॥

स्यग्रहस्य सकलं पूर्णंध्रुवमवश्यं वक्तव्यम् अत्रहेतुः स्वोच्चेति यो नीचस्थः स स्वोच्चमवश्यमेव पश्यति तद्दर्शनमेव पूर्णत्वहेतुः परंतु स्वोच्चस्वस्थानयोःशुभत्वादौ शुभमेव विपरीते वैपरीत्यमपीति ॥ ९ ॥ तत्रापिविशेषमाह किंत्विति किंतुविशेषस्तु यद्भाव स्वामीग्रहो नीचगोस्तितस्य भावस्यफलंत्वशुभमेव ददाति निश्चयेन तत्रयदि तुंगगोग्रहोनीचगग्रहेणयुतस्तदा स्वोच्चस्थस्य ग्रह स्यमध्यममेवफलं एवंनीचगस्याप्युच्चस्थं ग्रहयोगे मध्यममेवफलंवाच्यम् ॥६॥ फलनिर्देशप्रकारं निष्कृष्य दर्शयति पूर्णदृष्टयेति

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

पूर्णादृष्टिः सप्तमदृष्टिःसप्तमे सर्वग्रहाणांपूर्णैव गुरोस्त्रिकोणेपि शनेस्त्रिदशेपि भौमस्य चतुरस्रेपिपूर्णातत्रपूर्णदृष्ट्याग्रहो यं भावं पश्यति तस्यराशिर्लग्नतो व्ययपर्यंतं गणनीयः तत्रयावंति वर्षाणि संख्यातानि पुनरग्रे द्वादश द्वादशैवंयावदायुः संख्यांविधायतत्तद्वर्षे तस्य शुभाशुभं वाच्यं एवमग्रे समा वर्षाणि वाच्यानीत्यर्थः॥७॥पुनरपि विशेषमाह चेदिति जन्मनि आद्येवयसियदिग्रहः स्यात् तदापुरु षस्याप्याद्यावस्थायामेव फलंवाच्यं राश्यंतस्थग्रहस्यत्वत्यल्पं फलं अत्रसंकेतज्ञानं गुरुकृपयैव भवति तत्रग्रहाणांस्वतोऽवस्थाब्दा सूर्यः सप्तत्यब्दः चंद्रस्त्रिचतुरब्दः भौमोष्टाब्दः बुधोद्वादशाब्दःगुरुर्मध्यवयाःपंचाशदब्दः शुक्रोयुवाद्वात्रिंशदब्दः शनिर्वृद्धोऽशीत्य

चेदाद्येवयसिखगःफलंतदीयंतस्मिन्नेववयसिवाच्यमत्रवीर्यात् ॥
राश्यंतेयदिखचरोस्यनोदितंतत्संकेतोत्रगुरुपदाब्जभक्तिगम्यः ॥ ८ ॥

ब्दइति राश्यंशप्रयुक्ता अवस्थास्तुद्विविधाःदीप्ताद्याअष्टौवालपाद्याः पंचद्वयोःसंबंधं विमृश्य सुधियासदसत्फलं मिश्रितंवावाच्यं तत्र दीप्ताद्याः उच्चे दीप्तः स्वभेस्वस्थो मित्रभेहर्षितो भवेत् शांतः शोभनवर्गस्थोऽतिशस्तो दीप्तदीधितिः लुप्तोस्तेनीचभेदीनः पीडितः शत्रुपापभे एवमष्टाववस्थाः स्युर्दीप्ताद्या अग्रचारिणामिति नामानुसारेण फलंत्वमीषामित्यपि बाल्याद्यास्तुबालःकुमारोथवा युवाच वृद्धो मृतो लवानामृतुभिः क्रमेणेति षड्भिःषड्भिरंशैरेकैका बाल्याद्यवस्था तासुवर्तमानाज्ञेया इतिद्वयोर्योगे फलंवाच्यं यद्वा दीप्तादिषु

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

योगार्थं राशेर्दशभिर्दशभिरंशैरेकैका बाल्ययौवनवृद्धत्वाख्याः इदितोबालोमध्येयुवाऽऽसन्नलोपो वृद्ध इतितिस्र एव द्रष्टव्या अवस्थाः अस्तस्तु नष्टप्राय एवातस्तस्य किमपि फलंनेति बोध्यम् अत्रान्योपि विशेषश्चित्यः तथाहि यस्य जन्मनि नक्षत्रे वृद्धिभावमुपेयुषि ॥ तस्य श्रीरायुरारोग्यं भवत्येवेति निश्चयः ॥ तिथ्यादिषु तथावाच्यं क्षयेतस्मिन् क्षयोभवेत् ॥ तिथिरेकगुणा नक्षत्रं दशगुणं लग्नं लक्ष गुणं तत्समूहेधिकं फलं किंच केंद्रेषुचेत्सर्वे पापास्तदा श्वासक्षयगुदोदरार्त्त्यादिदुःखी दरिद्रश्च तथा दुःखी मूढोलोकविद्वेषकारी काणः पंगुर्निर्धनो ज्ञानहीनः अल्पायुः स्यात्केंद्रगाः पापखेटाः सर्वेचेद्रल्लद्धिडत्यंतनिंद्यइति तथा पापग्रहे कर्मगतेतिनीचे वक्रा

यद्भावपःखलयुतस्त्रिकगोरिनिम्नस्तद्भावहाविबलमेऽल्पफलःसमश्चेत ॥
केंद्रत्रिकोणपतयोऽधिकसत्सुवोप्यन्योन्यंधनव्ययगताःसखलानशस्ताः ॥ ९ ॥

न्विते पापखगैः प्रहृष्टे । नाशं कलत्रस्य वदंति तस्येति आचर्योपि लग्नेमानेसप्तमे चाथबंधौ पापाः सर्वे यस्यतुर्जन्मकाले॥ तेषामेको लग्नपश्चेत्तदा सौख्यल्पायुर्नीचांशगे निंदितश्च ॥ १ ॥तथा स्थिते जन्मनि यस्य पापे बाल्येच पित्रोर्मरणंचकष्टम्॥भिक्षाशनेनाप्युदरस्य पूर्तिः कथंचिदंगेन नरोविहीनः ॥ २ ॥केंद्रत्रिकोणेषु शुभो यदिस्यात्तद्राजयोगंसफलं वदंति ॥ स्वेशेक्षिते लग्नगतेसदंशेजीवेन दृष्टे धन राशिपेन ॥ स्वनीचभागादिमहीपयोगे जातोपि भूमेरधिपत्वमेतीति ॥ ८ ॥ अथ प्रकारांतरेणापि फलोपदेशरीतिमाह यद्भावपइति

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

यद्भावस्वामी पापग्रहयुक्तः त्रिकगः षष्ठाष्टमव्ययगः शत्रुभेनीचेवास्यात् तदा तद्भावस्य हानिर्वक्तव्या यदिसमः मध्यगः नोच्चनीच शत्रुमित्रादिगः नापिसदसत्संयुतः किंतु निर्बलेसमेराशौच स्थितः तदातस्य फलमल्पमेव केंद्रत्रिकोणनाथानांस्वतःशुभत्वेपि तत्र विशेषमाह केंद्रत्रिकोणेति केंद्रत्रिकोणपतयः स्वतोऽधिकसत्सुवोपि स्वभावतो विशेषेण शुभफलाअपि परंतु परस्परं धनव्ययगताद्विद्वादशगा न शोभनाः तत्रापि पापदृग्योगादौ तु तेऽवश्यमशुभाएव तदुक्तं केंद्रत्रिकोणपतयः संबंधेन परस्परम् इतरैरप्रस क्ताश्चेद्विशेषफलदायका इति इतरैर्द्विद्वादशस्वाम्यादिभिः अप्रसक्ता असंबद्धाश्चेत् शुभाज्ञेयाः ॥ अत्र यदिद्विद्वादशस्वाम्यादि

जन्मतःप्राग्विलोक्यस्तृतीयेदिनेचंद्रमाश्चेच्छुभैर्युक्तदृष्टोभवेत् ॥
जन्मतस्तर्हिवर्षेतृतीयेशुभंवाच्यमेवंखलैर्बालकस्याशुभम् ॥ १० ॥

योगेपि दुष्टत्वं तदाद्विद्वादशस्थत्वे किंवाच्यमिति इतरैरिति बहुवचनेन त्रिकादिसंबंधोपि दोषकृदिति सूचितम् एतत्सर्वं सकला इति पदेनोक्तमिति ॥ ९ ॥ अत्र प्रकारांतरेण सदसत्फलावच्छेदकवर्षसंख्यामनुभवसिद्धांद्वाभ्यां स्पष्टयति जन्मतइत्यादि जन्मतः जन्मदिनात्पूर्वं तृतीयेदिने चंद्रोद्रष्टव्यः यदि तत्र शुभग्रहैर्युक्तो दृष्टो बलवांश्च चंद्रोभवेत् तदा जन्मतस्तृतीये वर्षे बाल कस्य शुभंवाच्यं चंद्रस्य पापदृष्टियोगादौनैर्बल्यादौ तृतीयेदिनेऽशुभमिति एवं तृतीयमासेपिवाच्यं यथासंभवमिति ॥ १० ॥

CC-0. Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

अन्यत्राप्यतिदिशति एवमिति यथाजन्मदिनात्प्राक्तृतीये दिने विचारः कृतस्तथा सप्तमेखाब्धिमितेऽन्यत्रापि चंद्रंज्ञात्वा तत्त
न्मासवर्षादौ फलं ज्ञेयमिति ॥ ११ ॥ प्रकारांतरेण तत्तत्फलावच्छेदकवर्षसंख्यां निरूपयति ग्रहांकेति यो ग्रहो यादृशभावफले
उपयोगी सयस्मिन् भावेस्ति तद्भावगतराशिसंख्या तद्ग्रहसंख्ययोरैक्यसिद्धसंख्याकेवर्षे तस्यग्रहस्य फलं वक्तव्यम् अथवा त
त्संख्ययोरन्योन्यघातनिष्पन्नांकसंख्ये वर्षे तत्फलं वाच्यम् अत्रोदाहरणरीत्याह लग्नाधिनाथेति उक्तार्थकमेतत् अत्र यद्यपि पूर्वस्माद
विशेषाल्लग्नेशस्य पृथक् पुनरुपादानमनुपयुक्तं तथापि लग्नेशसंबंधिवर्षे तत्तद्ग्रहफलावश्यंभाव इति सूचनार्थं तदिति एतदे

एवंप्राग्जन्मतःसप्तमेह्निखाब्धिमितादिके ॥ सदसद्दृष्टयुक्तेब्जेतन्मितेब्देतथाफलम् ॥ ११ ॥ ग्रहाङ्कभा
वाङ्कयोगसंख्येवान्योन्यघातप्रमितेचवर्षे ॥ लग्नाधिनाथाङ्कगृहाङ्कयोश्चस्यात्सम्भवेतत्फलमिष्टभावे
॥ १२ ॥ क्षपाग्रहाःक्षपर्क्षगादिनर्क्षगादिनग्रहाः ॥ तनौचदृश्यखण्डकेतदाऽखिलाघसंक्षयः ॥ १३ ॥

वाह स्यादिति संभवे सत्येव ग्रहाणां लग्नेशस्य चान्योन्यमविरोधे इष्टभावेफलंज्ञेयमिति ॥ १२ ॥ इदानीं शुभयोगं दर्शयति क्षपाग्र
हाइति रात्रिग्रहाश्चंद्रशुक्रबुधशनयस्ते क्षपर्क्षगाः रात्रिराशयस्तु मेषाद्याश्चत्वारः सधन्विमकराः क्षपाबलाज्ञेयाः एवं दिनग्रहाः सूर्य
भौमगुरवः दिनर्क्षगाः सिंहकन्यातुलालिकुंभमीनगाश्चयदिस्युः तनौ लग्नेच दृश्यखंडे वर्त्तमानेसति एवंविधयोगे जातस्य जंतोः
सकलपापदुःखक्षयोज्ञेयः ननु लग्नस्य सर्वदा दृश्यखंडगतत्वेन सिद्धत्वात्तत्तदुपदेशो नापूर्वत्वेनेतिचेन्न होरादिवर्गाभिप्रायेण तस्य



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

दृश्यत्वोक्तेपूर्वत्वाविरोधात् वस्तुतस्तनुशब्दोत्र लक्षणयालग्नेशबोधकः तेन लग्नेशस्य दृश्यखंडगतत्वानवच्छेदकधर्मवत्त्वेन दृश्यगतत्वमपूर्वमेवाव्याप्यवृत्तित्वादसिद्धत्वंच तस्यसिद्धम् ॥ १३ ॥ तच्छेषं योगांतरंवाह तथेति तथाच पूर्वप्रतिपादितमहात्मता योगे अंगपेंदुभाधिपौ लग्नेशचंद्रराशीशावपि पापग्रहाणां योगदृष्ट्यादिसंबंधरहितौ तत्रापेक्षितौ यद्वा पृथगेवायंयोगः शुभएव परंतु सर्वत्रोत्तमयोगेषु शुभफलानुकूलसामर्थ्यप्रयोजकं लग्नेशचंद्रराशीशयोः पापग्रहदृष्टियोगसंबंधराहित्यमपेक्षितमेव असद्योगमाह यमइति यमः शनिः सुखाभ्रसूनुगः चतुर्थदशमपंचमान्यतमगः अशुभः तत्रापिविशेषः अरिनीचगः यदि शनिः शत्रुनीचगत

तथाङ्गपेन्दुभाधिपावसद्युतेक्षितौनचेत् ॥ यमःसुखाभ्रसूनुगोऽरिनीचगोनसत्फलः ॥ १४ ॥

गोचरेऽष्टकवर्गादौशुभोऽसन्वादृगादिना ॥ राश्यंशवीर्यैर्ब्दैसार्द्धव्यब्दैवातत्फलंदिशेत् ॥ १५ ॥

त्वे सति चतुर्थादिस्थानगतः तदा पूर्वोक्तमाहात्म्ययोगभंगहेतुः विशेषणाभावेतु योगभंगहेतुत्वस्याप्यभावः तत्प्रयुक्तविशिष्टाभावस्यापि संभवादितिभावः ॥ १४ ॥ अथ ग्रहाणांनिसर्गतः शुभत्वाशुभत्वादिसंभवेपि संबंधवशाद्वैपरीत्यमपि भवतीत्याह गोचरइति गोचरे सूर्योरसांत्येखयुगेऽग्निनन्दे इत्यादिनोक्ते अष्टकवर्गे स्यादर्कः प्रथमायबंधुनिधनद्व्याज्ञातपोद्यूनगइत्यादिनाभिहिते आदिपदात्ग्रहहोरादिषड्वर्गेच शुभत्वेनाभिमतः सएव पापारिदृष्टियोगादिसंबंधे नीचमारकादिविरुद्धस्थानसंबन्धेच सत्यशुभोभवति एवं गोचराष्टकवर्गादावसन्नशुभोग्रहः शुभमित्रदृष्टियोगादिसंबंधादौ सति शुभोभवतीत्यर्थः एवमष्टमेशस्याशुभत्वेपि लग्ना



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

धीशत्वे शुभत्वमित्यपि ज्ञेयं निर्दिश्यमानफले तदवच्छेदककालविशेषाकांक्षायामाह राश्यंशेति राशेर्वीर्ये बलिष्ठत्वे सति पूर्वोक्तगणनयाऽऽगततत्तद्वर्षादौ फलंवक्तव्यम् अंशस्य नवांशस्य बलिष्ठत्वेतु पूर्वोक्तगणनयाऽऽगततत्सार्द्धद्व्यब्दात्मकरूपैकादिकल्पनया फलम् वक्तव्यं तथाच राशिबले द्वादशद्वादशवर्षैः पुनरावृत्तिः नवांशबलेतु सार्द्धत्रिंशतावर्षैः पुनरावृत्तिः तत्फलमपितत्रतत्रनिर्देश्यमितिसिद्धम् अत्रायुरादावपिग्रहस्यैवं बलादिकं चिंत्यं क्रमात् शत्रुक्षेत्रसमक्षेत्रमित्रामित्राधिमित्रक्षेत्रस्वक्षेत्रस्ववर्गस्वोच्चादौ ग्रहाबलिनः स्वायुर्दायादिकं प्रयच्छंति एकाधिकारस्था ग्रहा बहवश्चेत्तदा तत्राद्यउदयी बलीज्ञेयः तस्य भुक्तांशा

कामेश्वरेनचशुभेनशुभेक्षिताढ्ये कामेपि नीचमदनेन दुरामयः स्यात् ॥
भावेषु वाच्यमपरेषु फलं तथैव सर्वंविमृश्य सुधिया सदुपासनाद्यैः ॥ १६ ॥

वेदघ्नाः वक्रीचेदब्धिभक्ताः अष्टमेशस्य शुक्लकृष्णभेदेन बलं साध्यं पुनः स्वोच्चेसतस्वगेहेच वेदामित्रगृहे शशीसमेसाम्यंरिपुगृहे शोध्यारुग्यब्दास्तथास्वभे त्रीणिवर्षाणि योज्यानियदिमध्यांशकेग्रहः किंच लग्नादौस्थितग्रहेषुक्रमाद्योज्या वियोज्याश्चाब्दाः । ७ ८ । १० । ११ । ३ । ६ । ७ । १३ । ९ । ११ । ११ । ५ ॥ अत्र सूर्यचंद्रहोरायां शुक्लकृष्णपक्षभेदतः स्वस्वायुष्यमूनि वर्षाणि शोध्यानिइति केषांचित्संकेतः ॥ १९ ॥ प्रकारांतरेणापिफलं निरूपयन् कस्यचिद्भावस्यफलमन्यत्राप्यतिदेशार्थमुदाहरणेनस्पष्टयति कामेश्वरेइति कामेश्वरे सतमभावनाथे नचशुभे पापेसति शुभग्रहैरदृष्टेऽसंयुक्तेच तथा कामस्थानेपि

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

पापग्रहैर्दृष्टे युक्ते च सति पुरुषो नीचमदनेन दुरामयः स्यात् मदने नीचत्वं पुरुषमैथुनप्रतियोगित्वानुयोगित्वान्यतरनिरूप कत्वं मातृभगिनीगुरुपत्न्यादिसंजिगमिषादिप्रयोजकत्वं च यद्वा नीचेषु मदनेनेति सप्तमी तत्पुरुषमाश्रित्य दुरामय उपदं शादिरूपः पातित्यहेतुर्वा उक्तं प्रकारमन्यत्राप्यतिदिशति भावेष्विति अपरेषु लग्नादिभावेष्वपि पापग्रहदृष्टियोगादिरूप संबन्धेन तत्तदुक्तफलेष्वपि नीचत्वादिकमूहनीयम् अत एव सर्वं स्थूलं सूक्ष्मं विमृश्यैव बुद्धिमता फलं वक्तव्यम् अन्यथा फलाध्वनोऽति विषमत्वेन फलोपदेशे कृते ज्योतिर्विदां मंदपुरुषोपालंभनीयत्वोपहास्यास्पदत्वादिप्रयुक्तः प्रतिष्ठाद्युच्छेदोऽपकीर्तिश्च स्यात् यथा

निजाग्रजातात्मजघासिरामकृते हि संकेतनिधौ कृतेऽस्मिन् ॥ ज्योतिर्विदा रामदयालुनाम्ना विशेषसंकेत इतः समाप्तिम् ॥१७॥ इति सप्तमः संकेतः ॥७॥ अथ योगाननुयोगादावुपयुक्तानिहेत्थशालादीन् ॥ विलि खामि कांश्चिदधुनाऽन्यानपि तत्रानुभवसिद्धान् ॥ १ ॥

ज्योतिर्विदां वाचो मिथ्यात्वं न भवेत्तथोपायमाह सदुपासनाद्यैरिति स्वप्रतिष्ठादिकामनयोच्छिष्टगणपतिश्रीदुर्गामहाभैरवाद्युपासनम वश्यं कर्त्तव्यं तेन तस्य मुखनिःसृता वाक् सत्यैव भवतीति ध्येयम् ॥ १६ ॥ संकेतसमाप्तिसूचकं पद्यमभिदधाति निजाग्रजातेति ॥ १७ ॥ सप्तमसंकेतव्याख्या समाप्ता ॥ ७ ॥ अथ प्रश्नाख्यमष्टमं संकेतमुद्भावयितुं तत्रावश्यमपेक्षितेत्थशालादीन् कांश्चिदन्यानपि योगा न्निरूपयितुं प्रतिजानीते अथेति अथ सप्तमसंकेतनिरूपणानंतरम् अनुयोगादौ प्रश्नोऽनुयोगः पृच्छा चेति कोशात् आदिपदेन वर्ष

CC-0. Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

मासदिनादिफलोद्भावनादावप्युक्तान् अनुकूलान् इत्थशालादीन् षोडशयोगेषु कांश्चित्प्रसिद्धान् इत्थशालमूसरिफनक्तयमयाकंबूलसंज्ञान् एवमनुभवसिद्धानव्यभिचरितफलकानन्यानपि पूर्वप्रणेतृप्रसिद्धान् विलिखामि तत्तद्बोधकतत्तत्पदवाक्यघटितश्लोकान् निबध्नामीत्यर्थः ॥ १ ॥ तत्र तावदित्थशालस्वरूपमाह यदीति शीघ्रो बहुगतिर्ग्रहः मंदं मंदगतिमल्पगतिंग्रहं घनांशं शीघ्रग्रहापेक्षयाऽधिकांशं पृष्ठादुपगम्य राशिव्यवधानेपिदृष्ट्यादिसंबंधेनाप्यंशैरेवसमीपमुपगम्य अत्यल्पांशांतरितो भूत्वा सुदृशा

यदिशीघ्रकृशभागैः पृष्ठान्मदं घनांशमुपगम्य ॥ मन्दायनिजां दीप्तिं दत्तेसुदृशेत्थशालः स्यात् ॥ २ ॥
कलया यदिचलऊनोमन्दात्पूर्णस्तदेत्थशालःस्यात् ॥ शीघ्रोमन्दादधिकोयदातदासन्नमूसरिफः ॥ ३ ॥
लग्नकार्येशयोर्दृष्टथभावेतयोर्मध्यगःसन्नुभाभ्यांचदृष्टश्चलः ॥ दीप्तिमादायशीघ्रान्निधत्तेस्थिरेऽग्रस्थितेचेच्छुभोनक्तयोगःस्मृतः ॥ ४ ॥

शोभनदृष्ट्यापश्यन् मंदम् अन्योन्यमुभयोरेवदीप्तांशेष्वेवशोभनदृष्टौ सत्यां निजां दीप्तिं तेजः मंदाय दत्ते ददाति सम्प्रदानदात्रोर्लग्नेशकार्येशाख्योस्तदेत्थशालःस्यात् ॥ २ ॥ तद्विशेषमाह कलयेति मंदाद्ग्रहात् यदिचलऊनः कलामात्रेणनत्वंशादिना अल्पःस्यात्तदेत्थशालः पूर्णः पूर्णफलायावगंतव्यः अधिकांशादिभिर्न्यूनाधिकभावेतु तदल्पफलइत्यर्थः मूसरिफयोगमाह शीघ्रइति शीघ्रग्रहो यदि मंदादंशादिभिरधिकःस्यात्तदा मूसरिफः ईसराफापरपर्यायः सचसन्नभवति कार्यविनाशहेतुत्वादिति ॥ ३ ॥ अथ नक्तयोगलक्षणमाह

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

लग्नेति लग्नं तत्कालीनं तदीशो लग्नेशः कार्यं प्रष्टुर्यद्विषयिणी प्रष्टव्यत्वप्रकारिका जिज्ञासा वर्त्तते सायद्भावसंबंधिनी इप्सिततद्विशेषः तद्भावेशः कार्येशउच्यते तथाच लग्नेशकार्येशयोः परस्परं दृष्टचभावे तयोर्मध्ये तदुभयापेक्षया शीघ्रोऽन्यः कश्चिद्ग्रहो वर्त्तमानः ताभ्यामुभाभ्यामेव दीप्तदृष्टयादृष्टः शीघ्राद्ग्रहाद्दीप्तिमादाय अग्रस्थिते तदपेक्षया स्थिरे मंदेऽल्पगतिके ग्रहे तत्रदीप्तिं लग्नेशकार्येशयो र्मध्यगामी तृतीयोग्रहस्तदन्यतमस्मिन् निधत्ते स्थापयति ददाति तदाऽयं नक्तयोगः अयंशुभफलद एवेतिभावः ॥ ४ ॥ नक्तयोगा द्यमयायोगो विशेषस्तमाह यमयात्विति पूर्वस्मिन्नक्तयोगे लग्नेशकार्येशमध्यगोग्रहः शीघ्रउक्तः अत्र यमयायोगेतु तन्मध्यगामी

यमयातुमन्दगामीतन्मध्येकार्यतनुपसंदृष्टः ॥ दीप्तदृशाशीघ्राद्युतिमादायददातिमन्दाय ॥ ५ ॥
यदेत्थशालस्तनुकार्य्यनाथयोस्तथाविधाभ्यांविधुरित्थशालवान् ॥ तदाकबूलंकिलयोगकृद्ग्रहद्यु
तिप्रभेदाद्बहुधोदितंबुधैः ॥ ६ ॥

मंदगतिरियानेवानयोर्भेदः इतरांशेसाम्यात् श्लोकः स्पष्टार्थः ॥ ५ ॥ कंबूलयोगं लक्षयति यदेति यदि लग्नेशकार्येश योरित्थशालोन्योन्यंस्यात् तत्र ताभ्यामुभाभ्यामित्थशालयुक्ताभ्यां विधुश्चंद्रोपीत्थशालयोगकर्त्ता तदा कंबूलं कंबूलयोगः स्यात् सचयोगः किलेति निश्चयेन योगकृद्ग्रहद्युतिप्रभेदात् योगकृतांग्रहाणांद्युतीनां दीप्तीनां प्रभेदात् नानात्वात् अयं योगोपि बहुधा षोडशभेदः तत्प्रयोजकदीप्तीनां षोडशभेदत्वात् दीप्तयश्चतत्तत्स्थानसंबंधप्रयुक्तदृग्रुचिविशेषाः



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

ते च भेदाः उत्तमोत्तमत्वोत्तममध्यमत्वोत्तमाधमत्वमध्यममध्यमत्वमध्यमोत्तमत्वमध्यमाधमत्वाधमाधमत्वाधममध्यमत्वाधमोत्तमत्वोत्तमत्वमध्यमत्वाधमत्वाख्यधर्मैर्द्वादश तेषु पुनरुत्तमत्वाधमत्वे प्रत्येकं द्विविधेमध्यमत्वं त्रिविधमिति षोडशभेदाः तत्र योगघटकपदार्थद्वयमध्ये प्रथममुपादानं चंद्रप्रयुक्तस्यैव पश्चाल्लग्नेशकार्येशतदन्यतमप्रयुक्तस्येति बोध्यम् ॥ ६ ॥ अथात्रप्रश्नादौ लग्नादिभावेषु ग्रहाणां प्रत्यक्षं परोक्षं वा फलं कस्यवाच्यमिति जिज्ञासायामाह लग्नस्येति प्रश्नादिसमये सामान्यतोभ

लग्नस्य पूर्वार्द्धगताः खगेन्द्राः प्रत्यक्षमेवेहफलं प्रदद्युः ॥ परार्द्धषट्कोपगतास्तुनूनं फलं प्रयच्छन्ति परोक्षमेव ॥ ७ ॥ चरलग्नगताद्दृकाणकाः क्रमशः स्युः शुभमध्यमाशुभाः ॥ द्वितनौ विपरीतगाःस्थिरेत्वशुभाभीप्सितमध्यमामताः ॥ ८ ॥

चक्रस्यपूर्वार्द्धगता दशमभोग्यांशानारभ्यचतुर्थभुक्तांशपर्यंतभषट्कगताग्रहास्तात्कालिकलग्नस्य प्रत्यक्षफलदाज्ञेयाः तथा चतुर्थादिदशमांतभषट्कगता ग्रहास्तुलग्नस्य परोक्षफलदाइत्यर्थः ॥ ७ ॥ अथसामान्यतः शुभाशुभज्ञानाय स्थूलप्रकारानाह चरलग्नेति राशित्रिभागोद्रेष्काणइत्युक्तेः सर्वेषु राशिषु प्रतिराशिद्रेष्काणत्रयं तत्रचरलग्नेद्रेष्काणः क्रमेणशुभमध्यमाधमास्तदनुसारेण तत्रतत्रप्रश्नेपि शुभत्वादिकं द्वितनौतुविपरीतगाः तत्रप्रथमद्रेष्काणे प्रश्नेनिंद्यं फलं द्वितीयेमध्यमं तृतीयेशुभं शेषंस्पष्टम् ॥ ८ ॥

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

अथाष्टौकार्यसिद्धिसूचकयोगानाह लग्नमित्यादित्रिभिः लग्नेशोलग्नंकार्येशश्चकार्यं पश्येत् परंतुलग्नकार्ययोश्चंद्रदृष्टौ सत्यामेव कार्यसिद्धिरित्येकोयोगः अत्राष्टस्वेवयोगेषु चंद्रदृष्टेरपेक्षा यतोग्रेस्वयमेव वक्ष्यत्याचार्यः एषुयोगेष्विदोर्दृष्ट्यावश्यमेवेष्टसिद्धि रिति द्वितीयस्तु पश्येतांचवान्योन्यभावौ लग्नेशः कार्यं कार्येशोलग्न मित्यर्थः तृतीयमाह यद्वान्योन्यं पश्यतोन्योन्यभस्थौ लग्ने शः कार्येशराशौकार्यभावेस्थितः कार्येशंपश्येत् एवं कार्येशोलग्नेशराशौ लग्ने स्थितोलग्नेशं पश्येदिति चतुर्थमाह यद्वान्योन्यं केवलं

लग्नंलग्नेशश्चकार्यंतदीशः पश्येत्पश्येतांचवान्योन्यभावौ यद्वान्योन्यं पश्यतोन्योन्यभस्थौ यद्वान्यो न्यं केवलं पश्यतस्तौ ॥ ९ ॥ यद्वास्वस्वस्थानगौ केवलंतौ यद्वान्योन्यस्थानगौ कार्यतन्वोः ॥ मध्ये यद्वैकत्रगावेषु योगेष्विदोर्दृष्ट्यावश्यमेवेष्टसिद्धिः ॥ १० ॥ यद्वैकगौ लग्नपकार्यनाथौ द्रेष्काणहोरांशन वांशकादौ ॥प्रश्नेप्रसूतावपि चिन्त्यमेषां बलानुसारेण फलं सुधीभिः ॥ ११ ॥

पश्यतस्तौ लग्नेशः कार्येशं कार्येशोलग्नेशमिति ॥ ९ ॥ पंचममाह यद्वास्वस्वस्थानगौ केवलं तौ लग्नेशो लग्ने कार्येशः कार्यभावे इति षष्ठमाह यद्वान्योन्यस्थानगौ अन्योन्यदृष्टिं विनैवलग्नेशः कार्यभावे कार्येशो लग्नेइति सप्तममाह कार्यतन्वोर्मध्येइति यद्वा कार्यतन्वोर्मध्ये कार्ये एवलग्ने एववालग्नेशकार्येशावुभौभवतः कार्यसिद्ध्यवश्यंभावे योगेषु सहकारिणमाह एषुयोगेष्विति एष्वि त्युपलक्षणमनंतरस्यापितथाचाष्टस्वेव योगेषु चंद्रदृष्टौ सत्यांकार्यसिद्धिरवश्यमन्यथा संदेहइति ॥ १० ॥ अष्टममाह यद्वैकगा

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

विति लग्नेशकार्येशौद्रेष्काणहोराहद्दानवांशादौ एकगौ एकस्मिन्द्रेष्काणे एकहोरायाम् एकत्रिंशांशे एकनवांशे वा यदिभवतस्त दाऽष्टमोयोगः अत्रैकस्वामिकत्वेन द्रेष्काणादावेकत्वं तदपि मेषीयत्वाद्यवच्छिन्नं नतुतत्तद्व्यक्त्यवच्छिन्नं तेनयद्वैकगावित्यादिना नपौनरुक्त्यं नापि व्यभिचारसंकरादिः एतत्संभवेतयोरेकद्रेष्काणाद्यवच्छेदेन सामानाधिकरण्यमपीति यथासंभवमेषां योगानां बहु स्थलेषूपयोग इत्याह प्रश्नेप्रसूताविति एषांलग्नेशादीनां बलानुसारेणैव फलतारतम्यं ज्ञेयम् ॥ ११ ॥ अथप्रष्टव्यविशेषजिज्ञासायामाह प्रष्टुरिति स्वचिंता आत्मशरीरादिसंबन्धी विचारःवंशस्यवंशोपचयापचयादेः सर्वत्रतत्ताच्चिंताप्रयोजकग्रहाणां सबलत्वेएवोक्तचिंता

प्रष्टुः स्वचिंतासबले कुजे स्याज्जीवेस्त्रियारात्रिकरे जनन्याः ॥ वंशस्य शुक्रेसहजस्य सौम्येग्वाक्यौरिपू णां जनकस्य सूर्य्ये ॥ १२ ॥ तनुलाभपयोश्च योबली शशभृद्यत्रततस्तुभावके ॥ अनुयोगकृतोविचि न्तनं हृदितद्भावगतस्य वस्तुनः ॥ १३ ॥

वाच्या ॥१२॥ अथ प्रकारांतरेण चिंतनीयपदार्थज्ञानमुद्भावयति तनुलाभपयोरिति प्रश्नकाले लग्नेशलाभेशयोर्मध्ये योलग्नेशोलाभेशो वाबली निसर्गकालचेष्टाहग्दिगादिषड्विधबलोपेतः ततःशशभृत् चंद्रः यत्रभावे तनुधनसहजाद्यात्मके वर्तते अनुयोगकृतः प्रश्नकर्तुः हृदि मनसि तद्भावगतस्य पूर्वंदर्शितद्वादशभावपदार्थानां मध्येचंद्राधिष्ठितभावप्रोक्तवस्तुनश्चिंतावक्तव्या अयंभावः लग्नलाभे शान्यतरबलिष्ठग्रहान्वितं भावमेव लग्नं प्रकल्प्य ततश्चंद्रस्तनुधनसहजेत्यादिगणनया यत्र भावेस्ति तद्भावप्रोक्तपदार्थज्ञानेन

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

चिंतनीयपदार्थजिज्ञासानिवर्त्तनीयेति ॥ १३ ॥ पुनरप्यत्रैव प्रकारत्रयेणजिज्ञासितचिंतां दर्शयति येनोडुपइति प्रश्नकाले यद्भावस्वामिनाग्रहेण चन्द्रो मुथशिली इत्थशालकर्तास्यात्तद्भावप्रोक्तवस्तुचिंतापिवाच्या अथवालग्नस्थितेन लग्नेशेनयद्भावनाथो ग्रहइत्थशालंकुर्यात् अथवा इंदुपुष्टग्रहांगपगभावभवापिइंदुश्चपुष्टग्रहश्च लग्नपश्चएषु योबलवान् सयस्मिन् भावेतद्भावभवापिचिंताज्ञेया अयमर्थः पुष्टग्रहस्तावन्नीचास्तारिगभिन्नएव सोपिपूर्वोक्तबलोपेतादनन्यः परंतुलग्नेशचंद्रपुष्टग्रहाणांत्रयाणामेव बलवत्त्वे चंद्रलग्नेशयोःप्राधान्यं तयोर्बलाभावे पुष्टग्रहाच्चिंतानिर्देश्या तत्रापि यथासंभवं लग्नचंद्रसंबंधापेक्षा यद्वात्रयाणांद्वयोर्वाबलादिना साम्ये

येनोडुपोमुथशिलीहृदितस्यचिंताप्रष्टुस्तथातनुगताङ्गपतीत्थशाली ॥ यद्भावपोभवतितद्भवनस्यवेंदुपुष्ट
ग्रहांगपगभावभवापिचिन्ता ॥ १४ ॥ केन्द्रेपुष्टार्कारयुक्तेक्षितेचधातोश्चिन्तैवंबलिष्ठार्किविद्भ्याम् ॥ दृष्टेयुक्ते
मूलजाब्जेज्यशुक्रैर्जीवस्याथोलग्नगैस्तैर्विशेषात ॥ १५ ॥

तद्भावत्रयंद्वयंवानुसृत्यैवचिंतावक्तव्येति ॥ १४ ॥ अथतत्रापि विशेषतो धातुमूलजीवचिंताज्ञानायाह केंद्रेइति पुष्टार्काराभ्यां बलवद्रविभौमाभ्यां प्रश्नलग्नकेंद्रे लग्नचतुर्थसप्तमदशमान्यतमस्मिन् युक्ते दृष्टेवासर्वेषु त्रिषुद्वयोर्वातदा प्रष्टुर्मनसिधातुचिंता एवंबलिष्ठार्किविद्भ्यां शनिबुधाभ्यां मूलजा अब्जेज्यशुक्रैर्जीवचिंतावाच्या अत्रसुवर्णादिमृत्तिकांतंधातुः भूमिमुद्भिद्य शिफाद्वारापादद्वारावाजायमानं मूलं प्राणभृतोजीवाः केंद्रेष्वपिविशेषमाहलग्नगैरिति तैर्धात्वादिकारिभिः सूर्यादिभिर्लग्नगैः सद्भि


CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

विशेषात्तदीया चिंतावाच्या यथासूर्योनिर्बलोपि लग्नगश्चेत्तदा धातुचिंताऽवश्यंवाच्या एवमन्येषां इदमप्यत्रज्ञेयं यथा सूर्यकुजयोः केंद्रस्थयोर्धातुचिंता तथातद्राशिषुमेषालिंसिंहेष्वपि लग्नस्थेषु धातुचिंता एवमग्रे तत्तद्राशिषुलग्नस्थेषुमूलचिंता जीव चिंताचेति ॥ १५ ॥ अथदुर्दिनादौ प्रश्नलग्नज्ञानोपायंसार्द्धार्ययाह अकचटेति अवर्गाद्या अष्टौवर्गाः तेषांख्यादयः क्रमात्स्वा मिनः ग्रहेषुचकारोवारद्वयं पठितस्तेन चंद्रस्ययशवर्गौद्वावेव अन्येषामेकैको वर्गइति ननुसूर्येन्दुव्यतिरिक्तानां सर्वेषामेवद्विद्विराश्यधि पत्वेन प्रकृते तत्तद्वर्गबोध्यत्वेनान्यतमस्यराशेः कथंग्रहइत्याकांक्षायामाह प्रश्नाक्षरेइति अयंभावः पृच्छकेन प्रश्नकाले ममकार्यंकदे

दुर्दिनादौलग्नज्ञानोपायः ॥ अकचटतपयशवर्गारकुशुबुगुशचचखगानांस्युः ॥ प्रश्नाक्षरेसमेसममसमेविष मंद्विभवनपेलग्नम् ॥ १६ ॥ मेघच्छन्नदिनादौपृच्छकगदिताक्षरैस्तनुर्ज्ञेया ॥ एवंध्वजादिकाऽयावर्गैःसदस त्फलाःक्रमात्प्रश्ने ॥ १७ ॥

तिवाक्ये प्रयुक्ते तत्रप्रश्नाक्षरे तत्प्रयुक्तवाक्यस्यादिमेक्षरे समेवर्गाद्वितीयचतुर्थादिरूपेसमोराशिः विषमे विषमोराशिर्लग्नं तथातत्र वाक्ये प्रथमोमकारःशनिस्वामिकस्यपवर्गस्य पंचमो विषमःअतस्तत्र प्रश्ने कुंभलग्नंज्ञेयं केचित्तुवाक्यघटकाक्षरैः समसंख्याकैः समंलग्नं विषमैर्विषममित्याहुः तदसत् एकाक्षरकेऽमिताक्षरके वा वस्तुतः संयुक्ताक्षरके वाक्ये तन्निर्णयानुपपत्तेः ॥ १६ ॥ मेघच्छन्नेति पूर्वाकांक्षापूरकमर्द्धं स्पष्टं पृच्छकोदीरितवाक्यादिमाक्षरवर्गैरेव प्रश्नस्य शुभाशुभत्वं स्फुटयति एवमिति अवर्गाद्यष्ट

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

सं०नि० ॥९४॥

वर्गैर्ज्ञेयाध्वजादयोष्टावायाः क्रमात् तत्र फलमपि सदसत् क्रमात् तेचाया ध्वजो धूम्रहरिश्वगोखरेभध्वांक्षाः तेषुध्वजहरिधेनुगजाः शुभा अन्येऽशुभाः यथानाम तथागुणा इतितत्त्वम् ॥ १७ ॥ प्रकारांतरैःशुभयोगानाह सेशेष्टेति ईशेन स्वामिना इष्टेन शुभेन मित्रे णच युक्तायस्माद्भावात् शुभदुर्द्धराव्यर्कशुभग्रहकृताहित्वार्कं सुनफानफादुरधरास्वांत्योभयस्थैर्ग्रहैरित्युक्तेः उभयतः शुभग्रह सत्त्वप्रयुक्तोयोदुर्द्धरायोग इत्यर्थः तथा पापसंबंधरहितः शुभग्रहः कामेचस्यात् तस्य भावस्य समृद्धिर्ज्ञेया इत्येकोयोगः द्विती

सेशेष्टयद्भवनतःशुभदुर्द्धरास्यात्कामेशुभःखलवियुग्यदितत्समृद्धिः ॥ लग्नेगुरुर्विधुदृशाविधुरिज्यदृष्ट्याभू र्यान्तिकुन्नरभगाःशुभदाःशुभाश्च ॥ १८ ॥ अंगुष्ठकर्णवदनस्तनहस्तनासाकट्यंसपादतलगण्डशिरांसिगु ह्यम् ॥ ओष्ठंचसंस्पृशतिवक्तिशृणोतिवेष्टंप्रष्टातदाकलयतिध्रुवमिष्टसिद्धिम् ॥ १९ ॥

यमाह लग्ने गुरुरिति गुरुश्चंद्रदृष्टोथवा चंद्रोगुरुदृष्टो लग्ने इत्यर्थः तृतीयमाह नरभगाइति यत्र सर्वे शुभा नरराशिस्थाएव तत्रापि शुभयोग इत्यर्थः केचित्तूत्तरार्द्धेप्येकमेव योगं मन्यंते तेनात्र श्लोके पूर्वार्द्धोत्तरार्द्धाभ्यांद्वावेव योगौज्ञेयौ ॥ १८ ॥ प्रश्नसमये शुभसू चकमंगस्पर्शादिकमपि दर्शयति अंगुष्ठेत्यादिना प्रष्टा यद्यकस्मात्तत्समये स्वकीयमंगुष्ठाद्यंगंस्पृशति अथवा इष्टं स्वयंवक्ति अथवा शृणोति तदा तदंगस्पर्शनम् इष्टस्य कथनं श्रवणंवा ध्रुवम् इष्टसिद्धिम् आकलयति सूचयति यद्वा प्रष्टा तादृशस्पर्शादौ तदानींजाते

ताटी० सं० ८

॥९४॥

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

स्वयमेवेष्टसिद्धिं कलयति अनुमिनोतीत्यर्थः ॥ १९ ॥ प्रसंगात्तदानीं शुभाशुभसूचकाश्चंद्रस्य द्वादशावस्था अपिदर्शयति मार्गक्षती इतिमेषादितः मेषमारभ्य प्रतिभं प्रतिराशि राशौराशावित्यर्थः नामानुरूपफलदागमपृच्छिकृत्ये गमे यात्रासमये पृच्छिकृत्ये प्रश्नेच तथाचमेषराशौ चंद्रे मार्गादितोद्वादश वृषराशौक्षत्यादितः मिथुने मृत्यादितः कर्कस्थे चंद्रे जयादितः सिंहेहसितादितः क न्यायांरत्यादितः एवमग्रे अवस्थाप्रमाणंतु नक्षत्रपादत्रितयेऽवस्थाचतुष्टयंभवति तेन नक्षत्रचरणनवकस्य सर्वाघटिकाः संकलय्य द्वाद

मार्गक्षतीमृतिजयौहसितंरतिश्चक्रीडाप्रसुप्तिभुजिरोगचलस्थिराख्यः॥ मेषादितःप्रतिभमर्कमिताअवस्था इन्दोःस्वनामफलदागमपृच्छिकृत्ये ॥ २० ॥ गणयेद्रविराशितस्तनुंसदसत्तत्फलमीदृशंक्रमात् ॥ अनुयोग कृतोदिताक्षरैर्द्विगुणैरामकृशैःशमेकतः ॥ २१ ॥

शभिर्भागे स्थूलमवस्थाप्रमाणं लभ्यते इति ॥ २० ॥ पुनस्तत्र शुभाशुभज्ञानायप्रकारद्वयमाह गणयेदिति रविराशितस्तदा तनुं प्रश्न लग्नंगणयेत्एकं द्वे त्रीणिचत्वारीति क्रमेणसंख्यानं कुर्यात् द्वादशांतमेव तत्र विषमे सत् समेऽसत् सूर्यराशितो विषमे प्रश्नलग्ने शुभं समेऽशुभमितिभावः द्वितीयं प्रकारमाह अनुयोगकृतेति अनुयोगकृता पृच्छकेन उदितानि उच्चरितानियावंति अक्षराणि तानिसर्वाणि द्विगुणीकृत्यरामैस्त्रिभिस्तष्टानि तनूकृतानि तत्रत्रिभिः कृशीकरणे तक्षणे एकमात्रशेषेशं कल्याणं प्रष्टुर्वाच्यं द्विशेषेशून्यशेषेच

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

सं०नि०

॥ १५॥

अशुभं शून्यं च क्रमात् फलं ज्ञेयमित्यर्थः ॥२१॥ पुनः कार्यसिद्धियोगमाह केंद्रेति स्पष्टोर्थः तमेव पुनः प्रकारांतरेणाह प्रश्नवर्णाइति पृच्छकोच्चारितवर्णाः रसघ्नाः षड्भिर्गुणिताः पुनः सनागाः अष्टयुक्ताः कार्याः ततोद्रिभिः सप्तभिर्भागेदत्ते शेषेग्रहे शुभे द्विचतुःपंचषट् शेषेसतीतियावत् प्रष्टुर्वाञ्छितातिर्वक्तव्येत्यर्थः ॥ २२ अथशुभयोगमपि दर्शयति चेदिति प्रश्नलग्नात् षष्ठसप्तमाष्टमेषु पाप ग्रहाः स्युः तदा दिव्यविनाशादिफलं प्रतिवादिनः शत्रोश्च चिंता तत्रापि विशेषमाह तनुपेति यदिते पापास्तनुपेन लग्नेशेन

केन्द्रकोणेशुभाह्यायषष्ठेखलाःशीर्षलग्नंयदाकार्यसिद्धिस्तदा ॥ प्रश्नवर्णारसघ्नाःसनागास्ततोद्र्याप्तशेषेग्र हेवांछितातिःशुभे ॥ २२ ॥ चेत्प्रश्नलग्नादरिकामनाशस्थिताःखलावातनुपान्विताऽवा ॥ प्रष्टुस्तदाद्रव्यवि नाशहानिक्लेशामयादिप्रतिवादिचिन्ताः ॥ २३ ॥ विवाहपृच्छासुमदद्विवृद्धिगःशशीज्यदृष्टोवनिताप्तिकृ न्मतः ॥ जलाङ्गपञ्चाङ्कमृतिव्ययस्थितःखलेक्षिताढ्योस्यनिरोधकृद्विधुः ॥ २४ ॥

युक्तास्तदात्ववश्यं द्रव्यविनाशादिफलं ज्ञेयम् ॥ २३ ॥ अथ विवाहप्रश्ने शुभाशुभयोगावाह विवाहेति विवाहपृच्छासु अमु कस्यममवाविवाहो भविष्यतिनवेतिप्रश्ने अत्र पृच्छास्विति बहुवचनेन भोग्यस्त्रीलाभमात्रस्य विषयता द्योत्यते उत्तरमाह मदेति मदद्विवृद्धिगः पृच्छालग्नात्सप्तमद्वितीयतृतीयषष्ठदशमैकादशगो बलवांश्चंद्रो बलवता गुरुणाच दृष्टश्चेत्स्यात्तदा वनिताप्तिकृत् अनायासेन सुंदरस्त्रीलाभकारीत्यर्थः अशुभयोगमाह जलेति चतुर्थलग्नपंचमनवमाष्टमद्वादशगः पापग्रहैर्युक्तदृष्टश्चंद्रः

सटी०

सं० ८

॥१५॥

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

अस्य स्त्रीलाभस्य निरोधकृत् प्रतिबंधकः अत्रजलांगपंचांकारिपुव्ययस्थित इति पाठो लेखकभ्रमात् उपचयगतचंद्रस्येष्टत्वोक्तेः तस्मात्पंचांकमृतिव्ययस्थितइति पाठउचित इति ॥ २४ ॥ अथोत्तमस्त्रीप्राप्तिनिमित्तभूतं योगद्वयमाह ज्ञार्केज्येति शुभर्क्षे स्वोच्चादिराशौ अद्यारिविक्रमाज्ञायेषु सप्तमषष्ठतृतीयदशमैकादशस्थानेषु स्थितः अरिविक्रमाक्षायेष्वितिपाठे अक्षशब्देन पंचमं गृह्यते तत्र बुधसूर्यगुरुभिर्दृष्टश्चचंद्रः प्रश्नेचेत्स्यात्तदा इष्टतमां प्रियामनुकूलां स्त्रियं वितरति ददाति अत्र योगेपि तादृशचंद्र इतिशेषः द्वितीयमाह द्व्यर्थाप्तये इति अंत्यतनुपौ व्ययेशलग्नेशौ इतरेतरस्थौचेत् व्ययेशोलग्ने लग्नेशो व्यये यदा

ज्ञार्केज्यदृष्टविधुरद्यरिविक्रमाज्ञायेषुस्त्रियंवितरतीष्टतमांशुभर्क्षे ॥ द्व्यर्थाप्तयेन्त्यतनुपावितरेतरस्थौवाङ्गा स्तपौचनिजभोच्चगतौकवीन्दू ॥ २५ ॥ यदिलग्नगतंसितचन्द्रगृहंबालिसद्ग्रहदृष्टयुतंशुभदम् ॥ समभांशग तौबलिचंद्रसितौतनुवीक्षणतोप्यबलाप्तिकरौ ॥ २६ ॥

भवतस्तदापीष्टवनितातिर्वाच्या अथवांगास्तपौ लग्नसप्तमेशौ इतरेतरस्थौ चेत्तदापि योगविशेषमाह निजभेतियदिकवींदू शुक्रचंद्रौ निजभोच्चगतौ स्वक्षेत्रस्वोच्चान्यतरगतौ भवतस्तदैव पूर्वयोगसत्त्वे वनितालाभोवाच्योनान्यथेतिभावः ॥ २५ ॥ पुनर्विवाह एव योगांतरं यदि लग्नगतमिति यदि प्रश्नलग्नंवृषतुलाककर्कान्यतमं बलिष्ठशुभग्रहैर्दृष्टं युक्तं तदापि तत्प्रश्ने शुभदं त ल्लाभाय वाच्यं योगांतरं तन्विति यदि चंद्रशुक्रौ बलवंतौ समराशिगौ समनवांशगौच संतौ लग्नं पश्येतां तदापि तल्लाभोवाच्यः

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

 

॥ २६ ॥ विवाहानंतरं वध्वा वैधव्ययोगमाह अष्टषष्ठेति अब्जश्चंद्रः प्रश्नलग्नात् अष्टषष्ठांगगः अष्टमषष्ठलग्नस्थश्चेत् तथा पापग्रहो लग्नाचंद्राद्वासप्तमेस्यात् तदाविवाहिता सा वधूरष्टभिर्वर्षैर्विधवाच्या वध्वाव्यभिचारबंध्यात्वान्यतरयोगमाह प्रश्नलग्नादिति यदि प्रश्नलग्नात् पंचमस्थः पापः शत्रुदृष्टो नीचगतश्च स्यात्तदा सा वधूर्विवाहिता सत्यपि असती व्यभिचारिणी परपुरुषगामिनी अथवाऽसुता अपत्यरहिता वंध्या ज्ञेयेति ॥ २७ ॥ विवाहविरोधियोगं पुनराह नोद्वाहइति यत्र प्रश्नेऽसिते कृष्णपक्षेसति तत्रचन्द्रे

अष्टषष्ठांगगोब्जःस्मरेचेत्खलःस्वामिनाशायनागाब्दकैःसावधूः ॥ प्रश्नलग्नात्सुतस्थोरिदृष्टःखलोनीचगश्चेद्वधूःसाऽसतीवाऽसुता ॥ २७ ॥ नोद्वाहोऽसितउडुपेसमर्क्षगेऽसद्दृष्टेऽष्टारिगउतसाशुभेन्दुभृग्वोः ॥ दारेशेव्ययरिपुदिष्टदेहगेवानीचेसासतिखलुपूर्वदारनाशः ॥ २८ ॥ प्रश्नकालेतुयद्भेविधुःस्यात्ततःपञ्चमंजन्मभंतद्वदिन्दंशतः ॥ सप्तमर्क्षतुवाप्रश्नलग्नांशपर्क्षप्रयातेविधौस्यात्प्रसूतिःस्फुटम् ॥ २९ ॥

समराशिस्थेऽसद्भिः पापग्रहैर्दृष्टे षष्ठाष्टमस्थेचसति उद्वाहोनवाच्यः अथ पूर्वदारनाशयोगद्वयम् इतेति अथेत्यर्थे सपापयोश्चंद्रशुक्रयोर्द्वयोरेवसतोः पूर्वदारनाश इत्येकः द्वितीयो योगः दारेशे सप्तमेशे व्ययरिपुदिष्टदेहगे द्वादशषष्ठनवमलग्नगे परंतु सासति सपापेअथवा दारेशे नीचगे सासति पूर्वदारनाशः स्यात ॥ २८ ॥ अथोढाया गर्भिण्या वध्वाः प्रतिबन्धाभावे भाविनः शिशोर्जन्मराशिविशेष



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

जिज्ञासायामाह प्रश्नकालेत्विति प्रश्नसमये यद्राशौ चन्द्रो वर्त्तते प्रतिबंधकासद्भावे तद्राशितः पंचमः सप्तमो वा राशिर्जन्मराशिर्निर्देश्यः
अत्र पक्षांतरमाह तद्वदिंद्वंशतः प्रश्नसमये यस्मिन्नवांशराशौ वा चन्द्रोस्ति पूर्ववत् तस्मादपिपंचमः सप्तमो वा जन्मराशिः अयं विक
ल्पस्तु यदि चन्द्रराशिर्बलिष्ठस्तदा राशितः यदाचनवांशो बलिष्ठस्तदानवांशराशितो जन्मराशिर्वक्तव्य इत्यभिप्रायेण व्यवस्थाप्यः
प्रसवकालविशेषजिज्ञासायांत्वाहप्रश्नलग्नांशपर्क्षमिति तदानीं प्रश्नलग्ने वर्त्तमाननवांशस्ययः स्वामी तद्राशौ यदा चंद्र आयास्यति
सतिसंभवे तदा प्रसवो वाच्य इत्यर्थः ॥२९॥ अत्र पुत्रो भविष्यति कन्यावेति जिज्ञासायामाह सुतेशेतिपंचमेशलग्नेशावुभावेव समरा

सुतेशलग्नपौसमेसुतासुतोऽसमेचचेत् ॥ यदीन्दुलग्नपौसुतेतदातुगर्भनिश्चयः ॥ ३० ॥ सुस्थौयत्रकुजसितौस
रक्तशुक्रावेकस्थौशरदिचतत्रगर्भिणीस्त्री ॥ लग्नस्थेसकुजयमेतुगर्भहानिर्यदेन्दौकुजयमभेतदाढयदृष्टे ॥३१॥

शिस्थौचेत्तदा सुताकन्या विषमराशिस्थौ चेत्तदा पुत्रो वाच्यःअपत्यप्रश्नेपि तयोरित्थशालेऽपत्यमवश्यं वाच्यमिति गर्भोस्ति नवेति
संशयनिवृत्त्यर्थमाह यदीति चंद्रलग्नेशौ प्रश्नलग्नात् पंचमेवर्त्तमानौ चेत्तदा अथवा तयोरित्थशालयोगश्चेत्तदापि गर्भोस्तीतिवाच्यम्॥३०॥
अस्यांममस्त्रियां वाकदाधानं भविष्यतीति प्रश्नेआह सुस्थाविति यत्रयस्यां शरदिवर्षे प्रश्नलग्नात्कुजसितौ सुस्थौबलवन्तौलग्नपंच
माद्यन्यतमस्थौ संबद्धौचान्योन्यम् अतएवसरक्तशुक्रौ विचारसिद्धतद्रूपौ तत्रवर्षेतस्या आधानंवक्तव्यम् अयंभावः सुस्थौचेत् कुजशु



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

क्ष्णौ भवतस्तदारक्तशुक्रयोर्निर्दोषत्वं गर्भहेतुयोग्यत्वंच संभवति सरक्तशुक्राविति विशेषणेन कुजस्यरक्तत्वं शुक्रस्यरेतस्त्वं च तयोरेवगर्भघटकत्वात् अतएव एकस्थावपिप्रश्नेऽपेक्षितौ रक्तशुक्रयोर्भिन्नस्थयोर्गर्भायोग्यत्वात् तत्रलग्नलग्नेशसंबंधोपियुक्तः अत्र प्रतिबंधकयोगद्वयमाह लग्नस्थेइति सकुजयमे सभौमेशनौलग्नस्थेगर्भहानिर्वाच्या अथवाचंद्रेकुजशनिराशिस्थे कुजशनिभ्यां युक्ते दृष्टेवातदापि गर्भहानिर्वाच्या ॥ ३१ ॥ पुनरप्यत्रगर्भे पुत्रोवाकन्यावेति संदेहनिवृत्त्यर्थमाह मन्दइति प्रश्नेशनौ पुरुषराशिनवांशस्थे सतिनृजनिः गर्भेपुत्रस्तदुत्पत्तिश्च अत्रविशेषमाह नचांगेइति लग्नस्थेशनौपुत्रोत्पत्तिर्नवाच्येत्यर्थः तथाचलग्नान्यतरराशिनवांश

मन्देनरर्क्षलवगे नृजनिर्नचांगे वापुंग्रहेक्षितनृभेपिसुतान्यथा स्या ॥
जीवोरविश्च विषमे सुतदौ बलिष्ठौ युग्मे कुजेन्दुभृगवोपि सुताप्रदाःस्युः ॥ ३२ ॥

स्थेशनौपुत्रोनान्यथा प्रतिप्रसवात्मतया पूर्वोक्तप्रतिबंधकप्रतिबधकमाह वापुंग्रहेक्षितेति पुरुषग्रहदृष्टेनरराशिस्थेपिशनौ पुत्रः तथाचलग्नस्थत्वस्यप्रतिबंधकत्वमव्याप्यवृत्तीतिभावः उक्तयोगद्वयाभावे सुताकन्याज्ञेया पुनःपुत्रयोगमाह जीवइति प्रश्नलग्नाज्जीवोरविश्चविषमेस्थाने विषमेराशौचबलिष्ठौचेद्भवतस्तदापुत्रः एवंयुग्मेस्थानेराशौचकुजेंदुशुक्रास्तदाकन्येति इदमत्रज्ञेयं गर्भस्य संभवेमासादिः कःकालोऽतीतइतिप्रश्नेतल्लग्नस्ययावंतोनवांशा अतीतास्तावंतोमासा अतीतावाच्याः अथवा–मासज्ञानस्यपृच्छायांगर्भिण्याभृगुनंदनः ॥ लग्नात्स्याद्यावतिस्थाने मासानाख्याहितावतः ॥ सुतान्संख्यातदावाच्यायदा धर्मात्परंगतइति स्पष्टार्थं

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

इदमपि दिनग्रहविशिष्टेदिनराशौलग्नेदिनेजन्मरात्रिग्रहे रात्रिराशौलग्नेरात्रौजन्मवाच्यम् अत्रोक्तंसतिसंभवे जन्मलग्नादावप्यवगंत व्यम् ॥ ३२ ॥ अथस्वरशास्त्रानुसारेणापि अस्यागर्भेकन्यापुत्रोवेत्यत्रविशेषजिज्ञासांनिवर्त्तयति अन्तर्वत्नीति अंतर्वत्न्यागर्भिण्याअ भिधावर्णः नामाक्षराणि वर्त्तमानशुक्लादितिथ्यंकसंख्ययाशरेंदुभिश्वयुक्ताः कार्याःपुनःखगैर्नवभिस्तष्टाःशेषे अवशिष्टेंकेसमेसति कन्यागर्भेवाच्या विषमे तस्मिन् पुत्रोज्ञेय इति ॥ ३३ ॥ अथयात्रादिप्रश्नेप्रतिवाक्यंनिर्देष्टुमाह अनुयोगतनाविति गमनंभविष्यति नवाकदाचेतिप्रश्ने तल्लग्नेशुभस्वामिसंबद्धे चरभेसति अभिलषितसिद्धियुक्तायात्राशीघ्रंचवक्तव्या आगमप्रश्नेआगमोप्येवं केवलेचर

अन्तर्वत्न्यभिधावर्णास्तिथिनाचशरेन्दुभिः ॥ युक्तास्तुष्टाःखगैःशेषेसमेस्त्रीविषमेनरः ॥३३॥अनुयोग
गतनौगमोद्रुतंचरभेसिद्धिरभीप्सिताशुभे ॥ स्थिरभेनगमागमौद्विभे सममत्रेन्दुदृशोऽनुगं फलम् ॥
॥ ३४ ॥ स्मरकर्म्मतनुष्वसद्ग्रहेनशुभं तुंगगते तदल्पता ॥ धनविक्रमगौ गतागमः सुखगौ स्विदुदृ
शागुरूससन् ॥ ३५ ॥

भेतुयात्रैवनाभीष्टसिद्धिः स्थिरभेतुगमागमयोरुभयोरेवाभावः द्विभेद्विस्वभावराशौ प्रश्नलग्ने समं नगमो नाप्यागमो विशेषात् किंतु मध्यमौ विलंबेन यात्रादौ वस्तुतः फलंतु इन्दुदृशोनुगं चंद्रदृष्ट्यनुसारेणैव बलिष्ठपूर्णचंद्रशुभस्निग्धदृष्टिसत्त्वे फलमिष्टसिद्ध्यादिरू पंशुभमेव त्रिष्वेव लग्नेष्वेतद्विचार्यंवाच्यमिति ॥ ३४ ॥ गमनादौजातेपुनः शुभमशुभंवेतिविशेषजिज्ञासायामाह स्मरकर्मेति सप्त

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

मदशमलग्नेषुपापग्रहाणां सत्त्वेऽशुभमेवभाति तत्रापिस्मरकर्माद्यन्यतमस्मिन्नुच्चगतपापग्रहयोगेप्यशुभं परंत्वल्पं क्वचिदंशेकिंचि च्छुभमपि शुभसंसृष्टमशुभमित्यर्थः अथगतः पुरुषः कदाऽऽगमिष्यतीत्यागमनप्रश्ने आह धनेति गुरू देवदैत्यगुरू उभावेव यदि द्वितीयतृतीयगौ भवतस्तदा गतस्यागमोवाच्यः। द्वितीयेवातृतीयेवा गुरुशुक्रौयदातदा आश्वेवागच्छतीत्याद्युक्तेः। पुनर्यदितौजीव शुक्रौप्रश्नेचतुर्थगौचंद्रेण बलिना शुभदृष्ट्याहृष्टौच तदा स आगमोगतस्यसन् सुखसिद्धियुतो वाच्यइत्यर्थः ॥ ३५ ॥ गमनागमनयोः प्रतिबंधकयोगमाह तनुचंद्रेति लग्नचंद्रसप्तमेषु त्रिष्वेव यदिदुर्द्धरायोगःस्यात् तदा गमागमप्रश्ने नृणांगमागमौनस्तः

तनुचन्द्रमदेषु दुर्द्धरायदि नस्तोत्रनृणां गमागमौ ॥ सशुभे चरलग्नइंदुदृग्युजि गन्तापुनरेत्यसौत्वरा ॥ ॥ ३६ ॥ यदि कोपि चरेंगऐनिविद्रविशुक्रेष्वृजुषु द्रुतंगमः ॥ स्थिरभेऽर्कजजीवदृग्युते नगमःस्यादनृजु ष्वपि कचित् ॥ ३७ ॥

जिगमिषुणागमनोत्तरं ममागमनं द्रुतमद्रुतंवेति प्रश्नेआह सशुभे इति इंदुदृष्टे सशुभेचरे प्रश्नलग्नेसति गन्ता गमनकर्त्ता प्रष्टा त्वरा शीघ्रं कृतकार्यः पुनरेति आयास्यति वर्त्तमानसामीप्येवर्त्तमानवद्वेति निर्देशादितिभावः ॥ ३६ ॥ पुनस्तत्र गमनयोग माह यदिकोपीति चरे प्रश्नलग्ने ऋजुषु सति संभवे वक्रत्वादिदोषरहितेषु शनिबुधसूर्यशुक्रेषु मध्ये कोपि एकोपि बली सन् स्या त्तदा द्रुतं गमो गमनं वाच्यं तदभावयोगद्वयमाह स्थिरभे इति स्थिरे लग्ने शनिजीवाभ्यां दृष्टे युक्तेच गमनं प्रष्टुर्नवाच्यं तथैव 

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

शनिबुधसूर्यशुक्रेषु वक्रत्वादिदोषविशिष्टेष्वपि गमनाभावो वाच्यइति ॥ ३७ ॥ कश्चिद्व्यवहारप्रयोजनादिकमुद्दिश्य दूरदेशं गतः सकदा कथं वा यास्यतीति प्रश्नेप्याह विखलेष्विति प्रश्नलग्ने सर्वेषु केंद्रेषु सर्वथा पापग्रहसंबंधरहितेषु सत्सु तथाऽऽयन भस्तनुषु सत्सहितासु लाभदशमलग्नेषु शुभग्रहयुक्तेषुच सत्सु उडुपे चन्द्रे निधनेऽष्टमस्थे सति तदा प्रवासवान्दूरदेशंगतः पुरुषः सुखलाभाभ्यां स्वगृहानुपैति प्राप्स्यतीत्यथः अत्रापि प्राग्वत् ॥ ३८ ॥ पुनरागमनयोगमेवाह मदेइति सप्तमे षष्ठे वा सखगे

विखलेषु चतुष्टयेषु सत्सहितास्वायनभस्तनुष्वपि ॥ उडुपे निधनेप्रवासवान्सुखलाभैः स्वगृहानुपैत्ययम् ॥ ३८ ॥ मदेरिभेवासखगेचकेन्द्रगेगुरौप्रवास्येतिगृहांश्चिराद्गतः ॥ त्रिकोणगज्ञास्फुजितोरपिस्मरांबुगेचरे ब्जेपथिकः पथीरितः ॥ ३९ ॥ खलेक्षिताढयेनवमेयमेरुजायमेक्षिताकोंडुपयोर्मृतौ तथा ॥ नसद्भृदृशाभीः पथिवाथवित्सितौशुभौमृतिस्थौनशुभौकुजार्कजौ ॥ ४० ॥

केनचिद्ग्रहेणयुक्ते सति गुरौच केंद्रगे सति किंचिदुद्दिश्य बहिर्देशांतरं चिराद्गतः प्रवासी गृहान् एति आगमिष्यतीत्यर्थः शीघ्रागमनयोगमाह त्रिकोणेति बुधशुक्रयोर्नवमपंचमस्थत्वे सप्तमचतुर्थान्यतरस्थे चरराशौ चन्द्रेच सति पथिकः प्रवासी पथि मार्गे वक्तव्य इत्यर्थः ॥ ३९ ॥ अथ प्रवासिनो मार्गे भयरोगादियोगान् दर्शयति खलेक्षिताढचे इति प्रश्नलग्नान्नवमे पापग्रहैर्युक्ते दृष्टे वा श

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

नौ सति रुजारोगो वाच्यः योगांतरं यमेति शनिदृष्टयोरष्टमस्थयोश्चंद्रार्कयोरपि प्रवासिनोरुजा वक्तव्या तत्राष्टमे बलिष्ठशुभग्रह दृष्टिश्चेत्तदा विशेषतोभीर्भयं नेति निर्देश्यम् अथ मृतिस्थौ बुधशुक्रौचेत्तदा तस्य शुभौ प्रवासिनः शुभकरौ कुजार्कजौ भौमशनी अष्टमगौचेदशुभाविति ॥ ४० ॥ अथ प्रवासिनो गमनान्निवर्त्तनकालं दर्शयति वक्रेति प्रश्नलग्नात् सप्तमेशे वक्रगे सति प्रवासिनो गमनान्निवर्त्तनं वाच्यं यन्मासे वक्रता भविष्यति तदा निवर्त्तनमित्यर्थः अथवा पुनः प्रकारांतरेण तत् कस्मिन् मासादाविति कालविशेषजिज्ञासायामाह बलीति तनोः प्रश्नलग्नाद्बलिष्ठो ग्रहो ग्रहांतराव्यवधानेन यत्र यत्संख्ये भावेस्ति तावद्भिर्मासैर्नि

वक्रेमदेशे गमनान्निवर्त्तनं बलीग्रहोयत्र तनोस्तदुन्मितैः ॥
मासैरथाङ्गाद्यतमेस्तिभेग्रहस्तद्घ्नार्कतुल्यद्युभिरागमो गृहे ॥ ४१ ॥

वर्त्तनं वाच्यम् अत्रवस्तुतो गमनान्निवृत्तिर्नवेति प्रश्ने सप्तमेशवक्रत्वाद्यपेक्षया निवृत्तिःकदेतिकालविशेषप्रश्नेतु बलिष्ठग्रहस्थित्यपेक्षयोत्तरमितिविवेकः अथ निवृत्तस्य गृहेकदाऽऽगमनमितिगृहागमनकालविशेषजिज्ञासायामाह अथांगादिति सबली ग्रहो लग्नाद्यतमे भे गृहेऽस्ति तत्संख्यया गुणिता द्वादशसंख्या द्वादशगुणितया तत्संख्ययेति यावत् तत्तुल्यद्युभिस्तत्संख्याकैर्दिनैस्तस्यगृहे आगमनं वाच्यमित्यर्थः ॥ ४१ ॥



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

अथपांथप्रसंगाच्छत्रोरपिगमागमादिविचारोपयोगियोगान्निर्दिशति सूर्येन्दुभ्यामिति प्रश्ने बंधुगाभ्यां चतुर्थस्थाभ्यां सूर्यचंद्रा भ्यां सद्भ्यां पांथशत्र्वोः तत्तत्प्रश्न उभयोः प्रवासिनः शत्रोश्चागमनं नवाच्यं तथा शुक्रबुधबृहस्पतिभिर्बंधुगैः पांथस्यशत्रोश्च गमनं वाच्यमेव पुनः शत्रोर्निवर्त्तनयोगमाह व्यंगेइति प्रश्नलग्नेस्थिरे चंद्रेच द्विस्वभावगेसति शत्रोर्निवृत्तिर्वाच्या पुनस्तस्यै वागमयोगमाह लग्नेइति स्थिरेलग्नेचंद्रेच चरराशिगेसति शत्रोरागमो वाच्यइति ॥ ४२ ॥ पुनरपि चिराद्गतस्य प्रवासिनः शत्रोश्चा

सूर्येन्दुभ्यांनागमोबंधुगाभ्यांशुक्रज्ञेज्यैरागमःपांथशत्र्वोः ॥ व्यंगेब्जेचांगेस्थिरेरेर्निवृत्तिर्लग्नेऽगेचेंदौचरेचा गमोरेः ॥ ४२ ॥ ग्रहैर्द्धनभ्रातृसुतस्थितैश्चिराद्गतागमोनष्टधनाप्तिरुत्तमैः ॥ सितार्चिताभ्यांद्रुतमागमश्चतु ष्टयाद्वितीयंचगतेग्रहेपिसः ॥ ४३ ॥

गमनप्रश्नेप्रतिवाक्यमाह ग्रहैरिति द्वितीयतृतीयपंचमगैर्ग्रहैः सद्भिश्चिराद्गतस्यागमनं निर्देश्यम् उत्तमैः शुभग्रहैस्तत्र स्थितै स्तुनष्टधनस्यापहृतधनस्य प्राप्तिरपिवाच्या तथासितार्चिताभ्यां शुक्रगुरुभ्यां तत्रस्थाभ्यां शीघ्रमागमो गतस्य प्रवासिनः शत्रो र्वावाच्यः अत्र योगेसुतेतिनोपादेयम् इतराचार्यैरनुक्तत्वात् तदुक्तं द्वितीयेवा तृतीयेवा गुरुशुक्रौयदातदा ॥ आश्वेवागच्छतिचमूः प्रवा

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

सी वा न संशयइति एवंचतुष्टयात्केंद्राद्द्वितीयं पणफरगृहं तस्मिन् कालेगतेग्रहेपिस आगमोज्ञेयइत्यर्थः ॥ ४३ ॥ प्रवासिनोऽनिष्ट योगानभिदर्शयति युतेक्षितइति तनोर्लग्नात्पापैरेव युतेक्षितः शनिर्दिष्टगोनवमगश्चेत्तदा प्रवासिनोरुजाज्ञेया एवं पापयुतदृष्टः शनिरष्टमगश्चेत्प्रवासिनो मृत्युकरस्तत्समदुःखकरोवा प्रवासिनोन्यदिग्गमनयोगमाह अथेति रवौशुभग्रहैर्युतेक्षितेऽष्टमगेसति तस्यान्यदिग्गतिः प्रवासिप्रश्नेईदृशयोगे तद्देशाद्देशांतरंगच्छेत्सइत्यर्थः ॥ ४४ ॥ अनुभूतमागमनयोगं दर्शयति यावत्तनोरिति

युतेक्षितश्चेन्नशुभैश्चदिष्टगःशनिस्तनोस्तर्हिरुजाप्रवासिनः ॥ सचेन्मृतौमृत्युकरोथसद्युतेक्षितेरवावष्टमगे न्यदिग्गतिः ॥ ४४ ॥ यावत्तनोरिंदुभमागमोदिनैस्तावद्भिरन्तर्यदिनग्रहोपरः ॥ मदस्वखांगाक्षगताःशुभाः शुभास्तनौनचंद्रः शुभदःशुभःखगः ॥ ४५ ॥ प्रश्नाक्षराण्यरिहतानिसकूनितष्टान्यश्वैःप्रवासिफलमेकतआ यियासुः ॥ अर्द्धेपथोऽस्यनिकटेथगृहेसलाभोरोग्यार्त्तआगमपरःशमृजौस्वपेस्यात ॥ ४६ ॥

तनोः प्रश्नलग्नात् यावत् यावन्मितं इंदुभंचंद्रराशिः तावद्भिर्दिनैरागमनं शत्रोः प्रवासिनोवावाच्यं तथा मदस्वखांगाक्षगताः सप्तम द्वितीयदशमलग्नपंचमगाः शुभाग्रहाः शुभा अभीष्टकरा भवंति तथा लग्नेचंद्रोनशुभः दशमेतुशुभएवेतिप्रसंगात्तत्स्वभाव उक्तः ॥ ४६ ॥ पुनः प्रकारांतरेण प्रवासिनः शुभाशुभविचारः प्रश्नाक्षराणीति पृच्छकेनोच्चरितानि प्रश्नेयावंत्यक्षराणि तान्यरिह तानि षड्गुणानि कृत्वा सकूनि सैकानिकार्याणि ततोश्वैः सप्तभिस्तष्टानि तनूकृतानि शेषेष्वेकत आरभ्य प्रवासिफलं वाच्यं तदाह



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

एकशेषे प्रवासी आयियासुः आगमनेच्छावान् द्विशेषपथो मार्गस्यार्द्धेवाच्यः त्रिशेषेऽस्यग्रामस्य निकटेज्ञेयः चतुः शेषेगृहेसलाभ आगतोवक्तव्यः पंचशेषेरोगी षट्शेषे आर्त्तः पीडितः सप्तशेषे आगमनार्थं सयत्नं करोतीतिवाच्यं तस्यकल्याणजिज्ञासायामाह शमिति स्वपेधनेशे ऋजाववक्रेसति तस्यशं कल्याणं वाच्यमिति ॥ ४६ ॥ अथयात्रालग्नादेवागमनकालानयनरीतिमाह विलग्नेति प्रश्नकालीनलग्नचंद्रयोर्येऽन्योन्यमंतरभागाः तयोरंतरंकृत्वायेऽवशिष्टाभागाइत्यर्थः तैर्यात्राकालीनं लग्नमंशाद्यात्मकंगुणनीयं पुनःख गुणैस्त्रिंशताभक्तं तत्रलब्धंमासाः ततः प्रथमस्थानेऽवशिष्टान्येवदिनानि ततो द्वितीयस्थानेयोंकः सद्विगुणाऽसनघट्यः पलानिचयथा

विलग्नचंद्रांतरभागनिघ्नं यात्राविलग्नं खगुणैर्विभक्तम् ॥ आयातिगन्ताखलुलब्धमासैर्दिनैर्घटीभिश्चयथाप्र
माणम् ॥ ४७ ॥ वादिप्रतिवादिनोर्जयपराजयप्रश्ने । लग्नेपापःप्रष्टुरेकोप्यरिघ्नःपापश्चास्तेहानयेप्रष्टुराशु ॥
सौम्येङ्गेप्रष्टुः क्षतिर्वृद्धिरस्तेदृष्टेःक्रूराक्रूरयोर्वैपरीत्यम् ॥ ४८ ॥

प्रमाणं ज्ञेयानि॥४७॥अथ वादिप्रतिवाद्यादीनां मध्येकस्यजयः पराजयोवेतिविचारार्थं जिज्ञासाकारं दर्शयति गद्येन।वादीति तत्र प्रश्ने प्र तिवाक्यानि लग्नेइति पृच्छकेन अत्र कलहयुद्धादौ कस्यजयः पराजयोवेति प्रश्नेकृते तल्लग्ने एकोपि पापग्रहो बलीचेत्स्यात्तदा प्रष्टुर्जय एवेति वाच्यं यदात्वस्ते सप्तमे पापःस्यात्तदा प्रष्टुर्हानिर्वाच्याशीघ्रं पराजय इति एवं लग्ने सौम्येग्रहे सति प्रष्टुर्हानिः सप्तमे शुभेसति प्रष्टुर्वृद्धिर्वाच्या तत्र शुभपापदृष्टौस्थितेर्वैपरीत्यमाह दृष्टेरिति तत्रलग्नसप्तमयोः क्रूराक्रूरदृष्ट्योः फले वैपरीत्यं बोध्यं यथा लग्नेशुभ

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

दृष्टिः शुभहेतुरशुभदृष्टिरशुभा एवं सप्तमे शुभदृष्टिः प्रष्टुरशुभा अशुभदृष्टिः शुभेत्यर्थः ॥ ४८ ॥ तत्रसंग्रामादौ पौरयायिविभागे नापिफलं निरूपयति भ्रातुरिति प्रश्नलग्नात्तृतीयभावात् षड्भावाः पौरा स्थायिन इत्यर्थः एवं भाग्यतो नवमात् षड्भावा यायिनोज्ञेयाः तत्र यत्पक्षेसौम्या ग्रहास्तस्यजयः तत्रापि स्थायिनो विशेषमाह किंत्विति सर्वैः सौम्यैर्लग्नसप्तमदशमनवमेषु सद्भिः स्थायी सत्त्ववान् बलपराक्रमवान् शत्रूणां नाशकर्त्ताचज्ञेयइति ॥ ४९ ॥ एवं धर्मे नवमे भौमशनीचेत् स्थायिनो भंगोपि एवं पापाः

भ्रातुःपौराभाग्यतःस्थायिनःषड्भावाःसौम्यायत्रखेटाजयोस्य ॥ किन्त्वंगव्योमास्तभाग्येषुसर्वैःसौम्यैः स्थायी सत्त्ववान् वैरिहन्ता ॥ ४९ ॥ धर्मेऽर्कीनीस्थायिभङ्गायसर्वेपापाव्योमायांत्यगायातुरिष्टाः ॥ शुक्रेज्ञेज्यालग्नगाःस्थायिवृद्ध्यैतद्वद्यूनेऽर्कार्किचन्द्रागुभौमाः ॥ ५० ॥लग्नस्थैस्तैस्त्र्युत्तरैःस्थायिहानिःसौम्यैर्व्यत्यासोथसंधिःखभूगैः ॥ पुंभेलग्नायांत्यगैःसद्ग्रहैर्वासोथोकेंद्रद्व्यंगपापैस्तुसंख्यम ॥ ५१ ॥

व्योमायांत्यगाः दशमैकादशद्वादशगाः प्रश्ने यातुर्यायिन इष्टाः जयदाः अर्थात्स्थायिनः पराजयदा इत्यर्थः एवं सर्वे शुभालग्नगाश्चेत स्थायी पौरस्तस्य वृद्धिर्जयः तथा प्रश्ने द्यूने सप्तमे सूर्यशनिराहुभौमाअपि स्थायिनो वृद्धये यायिनः प्रष्टुरर्थात् पराजयकराइति ॥ ५० ॥ हानिवृद्धियोगोक्तिपूर्वकयुद्धसंधियोगानप्याह लग्नस्थैरिति तैरर्कार्किचन्द्रादिभिःत्र्युत्तरैः त्र्यधिकैर्लग्नस्थैः सद्भिर्नतु त्रिभ्योन्यूनैरेकेन द्वाभ्यां वा स्थायिनो हानिः सर्वथा निदेश्या त्र्यधिकस्त्ववश्य सर्वथा हानिः सौम्यैर्लग्नस्थैस्तु व्यत्यासोनाम स्था



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

यिवृद्धिः इदं प्रागुक्तमपि त्र्युत्तरत्वादिविशेषार्थं पुनरुक्तं संधियोगः अथसंधिरिति खभूगैः दशमचतुर्थगैः सौम्यग्रहैः संधिर्द्वयोर्वि वदतोर्युध्यतोर्वानिर्देश्यः अथवा पुंभे पुरुषराशौ लग्ने लग्नायांत्यगैः लग्नैकादशद्वादशगैः सद्ग्रहैरपि संधिर्वाच्यः पुंभेइति पदं यथासंभवमुभयत्र योज्यं पाठोप्यत्र पुंभे लग्नायांत्यगैः सद्ग्रहैर्वासोथो इतियुक्तः सः संधिः संधिर्नाविग्रह इति कोशात तस्य पुंस्त्वात् युद्धयोगमाह अथोकेंद्रेति केंद्रद्विस्वभावराशिगैः पापैः संख्यं संग्राम इति ॥ ५१ ॥ अथप्रष्टुः

अजवृषसिंहसुताधनुरेणालिघटास्तनौजयप्रश्ने ॥ प्रष्टुर्जयेष्टफलदाः सद्ग्रहयोगेक्षणादिनातिशुभाः ॥ ५२ ॥ चौरप्रश्नेतु स्थिरेस्थिरांशेस्वजनैर्गृहान्तिकेचरेपरेणापहृतंनचान्तिके ॥ धनंसमेनद्वितनौचमध्यगंदिशस्त नुव्योममदाम्बुगेविधौ ॥ ५३ ॥

शुभयोगमाह अजेति मेषवृषसिंहकन्याधनुर्मकरवृश्चिककुंभाः जयप्रश्ने यदिलग्ने एतदन्यतमोराशिः स्यात तदाप्रष्टुर्जया द्यभीष्टफलंज्ञेयम् तत्रापिविशेषमाह सद्ग्रहेति ते एवयदिराशयो लग्नगताः बलिष्ठशुभग्रहयुक्तदृष्टाभवेयुस्तदातिशुभफलदाज्ञेया इति तेनधनकीर्तिप्रतिष्ठादिलाभोपि ॥ ५२ ॥ इतिजयपराजयप्रश्नोत्तराणि । अथधनादिमतां धनादिवस्तुनः केनचित् प्रतिरोधिना स्तैन्येकृते, तत्रचौरविशेषजिज्ञासया तत्प्रश्नेत्विति प्रतिवक्तृज्योतिर्विदं प्रतिकृतेइतिशेषः मदीयंवस्तु केन मोषकेणापहृतं संप्रति

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

तद्वस्तुसमीपेदूरेवेति प्रश्नेकृतेइत्यर्थः प्रतिवाक्यमाह स्थिरेइति प्रश्नकाले लग्नेस्थिरे तत्रस्थिरेनवांशेचसति गतंवस्तु स्वजनैः
संबंध्यादिभिरेवस्वसमीपवासिभिरेवापहृतं नत्वपरिचितैः तच्चापहृतंवस्तुतैरपहारावधि गृहसमीपे एवभूम्यादौस्थापितं चरेलग्ने
तत्रापि चरेनवांश एवप्रश्नेतु परेणपरिचितेनहृतं दूरंनीतंच एवंद्विस्वभावलग्नेतन्नवांशे समेन परस्वजनोभयभिन्नेनहृतंवस्तु मध्य
गंनातिदूरेनापि समीपेऽस्ति दिग्विशेषजिज्ञासायामाह दिशइति प्रश्ने तनौचंद्रे पूर्वस्यांदिशिगतं वस्तुवाच्यं व्योम्निदशमेचंद्रेदक्षि

रवींदुदृक्चेत्स्वजनस्तनौपुनःकुटम्बचौरोंगमदेश्वरौ तनौ ॥
नियोज्यमर्त्योद्युनपेंत्यसोत्यगे नरः परोबाह्यकरोऽन्यथानिजः ॥ ५४ ॥

णस्यां सप्तमेचंद्रेप्रतीच्यां चतुर्थेचंद्रेउदीच्यांवाच्यमिति ॥ ५३ ॥ पुनरपिप्रकारांतरेणचौरादिविशेषज्ञानं रवींदुदृगिति प्रश्नकाले
तल्लग्नेरवींद्वोर्दृष्टिश्चेत् स्वजनश्चौरः तथा लग्नसप्तमेश्वरौ लग्नेएवचेत्तदा कुटुंबपुरुषएवचौरः यदितुद्युनपे सप्तमेशेद्वादशतृतीयगेसति
प्रश्नस्तदानियोज्यमर्त्यः समीपवर्त्तिभृत्यविशेषपुरुषश्चौरः प्रकारांतरेणापिस्वकीयपरकीयविशेषज्ञानायाह नरइतिपृच्छकेन
बाह्यदेशेहस्तंकृत्वा प्रश्नःकृतश्चेत् परकीयोनरश्चौरः अन्यथाजानुनोरंतरालदेशेकरंकृत्वा प्रश्नःकृतश्चेत् स्वीयोजनश्चौरइ

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

त्यर्थः ॥ ५४ ॥ अथचौरस्यनामघटकानिकत्यक्षराणीतिज्ञानाकांक्षायामाह चरस्थिरेति चरेप्रश्नलग्नेचौरस्यद्व्यक्षरकंनाम स्थिरेचतुरक्षरकं द्विस्वभावे त्र्यक्षरकं वस्तुतश्चरस्थिरयोः समसंख्याकाक्षरघटितंद्विस्वभावे विषमसंख्याकाक्षरघटितंतत कथं अथचौरस्य कथंचिदवगतस्य पूर्वमप्येतादृशकर्मकर्तृत्वंकिंवा संप्रत्येवेति तथातस्यवयोजातिश्चकेत्यादि विशेषजिज्ञासाया माह स्वभोच्चभेइति प्रश्नेअस्तपेसप्तमेशे स्वभोच्चभेस्वराशिस्वोच्चादिस्थेसति प्रागपिचौर्यकर्मकर्तासचौरः वयः बाल्याद्यवस्थां खगबाल्यादिनोर्वयइति कोशात् जनिं जातिं जन्मवा अंगपतेः समांलग्नेशवयआदि समंवयआदिकंचौरस्यवदेदित्यर्थः तत्रग्रहाणां

चरस्थिरद्व्यंगतनुष्वपि क्रमाद्विवेदवह्न्यक्षरकाह्वतस्कराः ॥
स्वभोच्चभे प्रागपि तस्करोस्तपेवयोजनिं चांगपतेःसमांवदेत् ॥ ५५ ॥

वयांसिनरजातके वयांसिचस्युःस्तनपानबाल्यकुमारतायौवनमध्यवृद्धाः ॥ अतीववृद्धाइतिचंद्रभौमज्ञशुक्रजीवार्कशनैश्चराणा मिति यद्वाबालःकुमारोथयुवाचवृद्धोमृतोलवानामृतुभिः क्रमेणेत्योजराशौसमेतुवैपरीत्येनेत्यंशभेदेन सर्वेषामवस्थाउक्ताः जातिस्तु विप्रादितःशुक्रगुरूकुजार्कौशशीबुधश्चेत्यसितोंत्यजानामिति तथाचंद्रार्कजीवाज्ञसितौकुजार्कीयथाक्रमंसत्त्वरजस्तमां सीतितदुपलक्षितागुणाअपिज्ञेयाजनिशब्देनजन्मोक्तौतु देवांब्वग्निविहारकोशशयनक्षित्युत्करक्ष्मारवेः सूतौवीर्यवतःस्थलेजनिरथ

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

सं०नि० प्रश्नेतुचौरस्थितिरिति ॥ ५५ ॥ अपहृतधनस्यचतुरोलाभयोगान्निर्दिशति पूर्णेब्जेइति पूर्णेचंद्रेजीवशुक्रदृष्टे साधिकारे लग्नगेसति सटी०

॥१०३॥ हृतस्यवस्तुनः प्राप्तिरित्येकोयोगः चंद्रस्यपूर्णत्वंशुक्लैकादशीमारभ्यकृष्णपंचम्यंतंभवति सद्ग्रहयुक्तेशीर्षोदयेप्रश्नलग्ने इति सं० ८

द्वितीयो योगः शुभग्रहैस्तृतीयद्वितीयलाभगैरिति तृतीयः चतुर्थसप्तमदशमगतैःशुभग्रहैरितिचतुर्थइति ॥ ५६ ॥

अथदृढं लाभयोगं स्पष्टयन् लाभदिक्चौरकृत्ययोर्ज्ञानोपायमाह आयेशइति लाभप्रश्नेलाभेशोदाताभवति अंगनाथो लग्नेशो भोक्ता

पूर्णेब्जे द्विगुरुदृशांगगे हृताप्तिर्वाशीर्षोदयतनुभेससद्ग्रहे स्यात् ॥ सत्खेटैः
सहजधनायगैश्चवाप्तिर्बंधस्तांबरगशुभैश्चतद्वदुक्ता ॥ ५६ ॥ आयेशोभवति
धनप्रदोंगनाथःस्याद्भोक्तायुतिरनयोर्द्रुतं दृशेन्दोः ॥ स्वाप्यैस्यादथबलिकें
द्रगग्रहस्याथांगर्क्षस्यहरिदथाकृतिर्दृकाणैः ॥ ५७ ॥

ग्रहीतास्यात् अनयोर्लग्नलाभेशयोर्योगे बलवदित्थशालरूपे लग्नलाभान्यतरस्थत्वरूपेऽन्योन्यगृहस्थरूपेवा सामानाधिकरण्या

त्मकेवासति तत्र चंद्रसदृष्टौसत्यां स्वाप्तिर्धनप्राप्तिरवश्यंवाच्या लाभदिग्विशेषजिज्ञासायामाह बलिकेंद्रगेति बलिष्ठकेंद्रस्थग्रहस्य ॥१०३॥

प्रागाद्यारविशुक्रलोहिततमःसौरींदुवित्सूरयइत्युक्तादिग्वाच्या केंद्रेग्रहाभावे लग्नराशेर्दिग्वाच्या ताश्चमेषकुलीरतुलालिघटैः प्रा

CC-0 Shri Krishna Museum, Kurukshetra, Digitized by eGangotri

ग्रुत्तरतो गुरुसौम्यगृहेषु पश्चिमतश्चवृषेण निवासो दक्षिणभागकरौ मृगसिंहाविति केचित् वस्तुतस्तु प्राच्यां मेषधनुःसिंहा याम्ये गो
मृगकन्यकाः ॥ द्वंद्वकुंभघटास्तोयेउदक्कर्कोण्डजालय इतिदिशोज्ञेयाः प्रयोजनं चौरस्य वस्तुनो वा दिग्ज्ञानं यस्मादपहर्तुर्वस्तुलाभो
भावी तस्याकृतिःकीदृशीतिजिज्ञासायामाह अथाकृतिरिरिति तत्र द्रेष्काणाः प्रथमपंचनवपानामित्युक्ताएव तेषांविशेषः स्वरूपंच
लिख्यते तेंतावत्सलिलदहनमिश्रभेदास्त्रिविधाः तत्रशुभग्रहाणांसलिलाख्याः पापानांदहनाः तथासलिलाख्याः सपापाः एवंदहनाः
ससद्ग्रहाश्चेन्मिश्राः स्युरिति तथास्वरूपंतेषां नृयुग्ममीनयोराद्यौमध्यौकर्कटचापयोः ॥ कन्यांत्यः सौम्यरूपाख्याद्रेष्काणाः पंचकी
र्तिताः १ द्रेष्काणः कर्कटाद्यस्तुफलपुष्पयुतः स्मृतः ॥ रत्नभांडान्वितौज्ञेयौ धनुर्मध्यतुलादिमौ २ रौद्रामेषमृगालीनांमध्यांत्याः
कुंभजास्त्रयः ॥ नृयुकुलांतिमौमीनमध्यः सिंहाद्यमध्यमौ ३ उद्यतास्त्रानृयुङ्मेषमृगकुंभभवास्त्रयः ॥ चापाद्यंत्यातुलांत्यश्चमध्यौ सिंहांत्य
संभवौ ४ मीनकर्कटयोरंत्यौ वृश्चिकस्याद्यमध्यमौ ॥ सर्पाश्चत्वारएवैतेद्रेष्काणानिगडाश्चते ५ व्यालाः कुंभालिमध्याद्याः कर्कमीनां
तिमौतथा ॥ सिंहाद्यांत्यौमृगाद्यश्चतुलायामध्यमांतिमौ ६ वृषाद्योमकराद्यांत्यौद्रेष्काणाःपाशधारिणः ॥ तुलामध्यांत्यसिंहाद्यकुंभाद्याः
पक्षिणः स्मृताः ७ अत्रवराहाचार्यैर्बृहज्जातकादिग्रंथे कटयांसितवस्त्रवेष्टितः कृष्णः शक्तइवाभिरक्षितुं रौद्रः परशुंसमुद्यतंधत्तेरक्त
विलोचनः पुमानित्यादिभिः षट्त्रिंशताश्लोकैर्विशेषतः स्वरूपंपृथक्सर्वेषामेव द्रेष्काणानामेकैकश्लोकेएकैकस्याभिहितं तच्चतत्रैव
द्रष्टव्यमिति इदमुक्तंषट्पंचाशिकायामपि अंशकाज्ज्ञायतेद्रव्यं द्रेष्काणैस्तस्करादयः ॥ राशिभ्यः कालदिग्देशावयोजातिश्चलग्नपा

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

दिति अस्यार्थः अंशकात् प्रश्नलग्ननवांशात् द्रव्यंधात्वाद्यात्मकं धातुंमूलंजीवमित्योजराशावित्युक्तत्वात् समेवैपरीत्याच्च तद्वर्णो
पिचंद्रलग्नराशिसदृशः अरुणसितहरितादिरूपः तस्यदीर्घमध्यह्रस्वत्वादिकमपि सिंहकन्यातुलालयः युग्मकर्कधनुर्मृगाः मीनघट
गोजाः दीर्घमध्यह्रस्वराशयः क्रमादुक्तास्तदनुरोधात्क्रमात् वस्तुबलाबलनवांशबलाबले द्रेष्काणादर्शिताः एवंराशिभ्यः कालदि
ग्देशाः रात्रिबलेलग्नेरात्रौ दिनबलेदिवाहृतंधनं तत्तद्राशिदिशिगतंच तथा मेषादिराशिस्थानेष्वपहरणंचवाच्यं स्थानान्येषांखचरा
श्रसर्वेइत्युक्तदिशावोध्यानीति ॥ ९७ ॥ अथाभीष्टयोगं दर्शयन् कार्यसिद्धिनिर्णये एव तदवधावाकांक्षोदयाद्बहुभिःप्रकारै

ओजस्विकार्यतनुपोडुपसंप्रयोगेऽभीष्टार्थसम्यगुदयेष्ववधिर्विधिज्ञैः ॥
सकर्कभोनविधुभेकथितोश्विभादेर्धिषण्यायनाहनखभास्करदन्तभूपैः ॥ ९८ ॥

रवधिदिनादीनिदर्शयति ओजस्वीति ओजस्विनौ बलिष्ठौ यौ कार्येशलग्नेशौतयोर्बलिष्ठेनैव चंद्रमसा संप्रयोगे सति प्रष्टुरभी
ष्टार्थसम्पद् भवति एतेन लाभयोगोपिसिद्धः उदयेषु संपदां सुखादिसाक्षात्कारप्रयोजकत्वरूपभोगयोग्यत्वादिषु विधिज्ञै
राचार्यैः अवधिः कथितः तमेवाह सैकेइति प्रश्नसमये अर्कभोनविधुभे सूर्यनक्षत्रहीने चंद्रनक्षत्रे सैकेसति तत्राश्विन्यादितो गणनां
विधाय अश्विभादितोऽवधिदिनानिज्ञेयानि ॥ ९८ ॥



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

खांकैरितिस्पष्टम् ॥ ५९ ॥ घस्रैरित्यत्रापि कार्यस्यावधिज्ञानाय प्रकारांतरमाह वितनूपतीति लग्नेशराश्यादिस्पष्टरहितकार्येश स्पष्टस्ययेंशाः कार्येशस्य न्यूनत्वे द्वादशराशिस्थाने योज्याः ततस्त्रिघ्नास्तेंशाः कार्याः पुनः खवारिधिकुशाः चत्वारिंशतातनूकृ तास्तष्टाः अवशिष्टानि दिनानि चरे प्रश्नलग्नेऽवधिः स्थिरेतुतानि द्विगुणानि द्व्यंगेत्रिगुणानि कार्येवधिदिनानि ज्ञेयानीत्यर्थः इदं द्विगुणत्वत्रिगुणत्वादिकं निमित्तानुरोधेनानंतरोक्तावधावपीति केचित् ॥ ६० ॥ अवधिज्ञानाय पुनः प्रकारांतरं तन्वंशनाथेति

खांकैस्तथाखधृतिभिःखदिनैःखसिद्धैर्भूपैर्वियद्रविमितैःखदिनैःखसूर्यैः ॥ सूर्यैर्नखैरदशिवाष्टिभिरभ्रगो भिःखाक्षेंदुभिश्चखरसैःखगुणैःखगोभिः ॥ ५९ ॥ घस्रैर्दिनैःखभमितैःक्रमतोवधिःस्यात्कार्यस्यवाथवितनू पतिकार्यपांशाः ॥ त्रिघ्नाःखवारिधिकृशाश्चरभेदिनानि द्विघ्नान्यगेद्वितनुभेत्रिगुणानिकार्ये ॥ ६० ॥ तन्वं शनाथसमयोपितनूदितांशसंख्योयनक्षणदिनर्त्तुकमासपक्षाः ॥ अब्दश्चघर्मकिरणादथवांगगांशाद्यत्रांश पस्तदयनादिषुतन्मितःस्यात् ॥ ६१ ॥

प्रश्नलग्ने वर्त्तमाननवांशस्वामी बलिष्ठश्चेत्तदा वक्ष्यमाणतत्समयोपि कार्यसिद्धौ वक्तव्यः तत्रापि विशषमाह तनूदितांशेति तनौ लग्ने उदिताये नवांशास्तत्संख्यातत्कालस्यज्ञेया यथा मेषलग्ने केनचित्प्रश्नः कृतः तत्काले तस्य पंचमो नवांशश्चत्वारोतीताः पंचमस्य स्वामी सूर्योबली तस्यकालोऽयनं तत्र कियद्भिरयनैः कार्यसिद्धिरित्याकांक्षायाम् उदितनवांशस्य पंचमत्वात पंचभिरयनैः

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

सावक्तव्या नवांशेशग्रहाणां कालमाह अयनेति घर्मकिरणात् अयनादिरब्दांतः कालउक्तः पुनः प्रकारांतरम् अथवेति अंगगांशात लग्ननवांशाद्यावन्मिते नवांशे वर्त्तमाननवांशस्वामी प्रश्नेवर्त्तते तावन्मितैरयनादिभिः कार्यसिद्धिर्निर्देश्या एवं चतुर्धा अवधिरुक्तः तत्र यथासंभवं बुद्धिमता कालोवक्तव्य इति ॥ ६१ ॥ निजाग्रजातेति संकेतसमाप्तिसूचकः श्लोकःस्पष्टार्थः ॥ ६२ ॥ इति संकेतनिधिव्याख्यायामष्टमः संकेतः ॥ ८॥ अथजातकादिशास्त्रसिद्धांतसिद्धहोरादिषड्वर्गानुसारेण जातकप्रश्नयोः साधा

निजाग्रजातात्मजघासिरामकृते हिसंकेतनिधौ कृतेस्मिन् ॥ ज्योतिर्विदा रामदयालुनाम्ना प्रश्नाख्यसङ्केतइतःसमाप्तिम् ॥६२॥ इतिसंकेतनिधावष्टमःसंकेतःसमाप्तः ॥८॥ प्रश्नेजन्मनि वायदिरविहोरांगे सुखी न बाल्ये स्यात ॥ पश्चात्स्वयत्नतोसौ धनी चविपरीतामिंदुहोरायाम् ॥ १ ॥

रण्येन फलं वक्तुं नवमं संकेतमुपदिशति प्रश्नेजन्मनिवेति प्रश्नेलग्ने जन्मलग्ने वा तत्समये यदि रविहोरास्यात तदा पृच्छाविषयो जातो वा पुरुषादिः प्रथमं बाल्यादौ सुखीनवाच्यः किंतु दुःखभागेव पश्चात् षोडशवर्षाद्यतिक्रमे स्वयत्नेन सुखीधनीच ज्ञेयः इंदुहोरायां चन्द्रहोरायां तु विपरीतं पूर्वस्मात् बाल्ये सुखी पश्चाद्दुःखीत्यर्थः ॥ १ ॥

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

होरेशतएव पृष्टस्य जातस्य चाकारविशेषादिकमपिसूचयति होरेशइति वर्त्तमानहोरेशः सूर्यचंद्रोवा यदि सासद्ग्रहः सपापः पुनः सव
क्रश्चेत्तदा पृष्टस्यजातस्यवा सद्दग्वक्रंसनेत्रमुखंवक्रंवाच्यं यद्वा होरेशोयदि सवक्रः बलिष्ठः कुजयुक्तः केचित्तु होरेशएववक्रश्चेदि
त्याहुः तन्न सूर्यचन्द्रयोर्वक्रत्वासंभवात् वस्तुतो होरेशोयदिपापग्रहेण वक्रेणचयुक्तउभाभ्यांयुक्तइत्यर्थः अथवा होरायां वर्त्तमानायां
यदि पापग्रहवक्रयोर्योगस्तदेति प्राचीनसंमतोर्थः तदा वदनंनयनंयुक्तं वक्रमित्यर्थः तथा सूर्यचंद्रयोर्मध्ये सूर्यःसचंद्रोवर्त्तमानहो
रायांचंद्रश्चापि सपापस्तदापि तस्यमुखं विकृतरदनरसनोष्ठं विकृता लोकविलक्षणाः वक्रत्वादिनाकुत्सिताःविकारवंतोवारदनाः दंताः

होरेशश्चेत्सासद्ग्रहःसवक्रस्तदासद्दग्वक्रम् ॥ वक्रंतथार्कविध्वोःसँद्दसतोर्विकृतरदनरसनोष्ठम् ॥ २ ॥
द्रेष्काणपोयत्रगृहेतदङ्कसंख्याःसहोत्थाःसयदाससौम्यः ॥ तेजीविनोथेतरथामृताःस्युस्तत्सौहृदाद्येसह
जैःसुखाद्यम् ॥ ३ ॥

रसनाःजिह्वाओष्ठौचघटंकतयायस्ययस्मिन् वा संतिताद्दशं तस्यमुखंज्ञेयम् ॥ २ ॥ होराविपाकमभिधायद्रेष्काणफलंनिरूपयति द्रेष्का
णपइति वर्त्तमानप्रश्नजन्मलग्नद्रेष्काणपोयत्र गृहेराशौ तस्यराशेर्ये एकद्वित्र्यादिरूपाअंकाः तत्संख्याः सहोत्थाः भ्रातरस्तस्यनि
र्देश्याः सद्रेष्काणेशोयदा ससौम्यः शुभग्रहयुक्तदृष्टस्तदातेभ्रातरो जीविनः चिरकालजीविनोवाच्याः इतरथा पापग्रहयुक्तदृष्टश्चेत्त
दातद्भ्रातरोमृतावाच्याः तत्सौहृदाद्ये लग्नेशस्यद्रेष्काणेशेनसौहृदाद्येसहजैस्तस्य पुरुषस्यसुखप्रेमादिवाच्यं यद्वा तत्सौहृदाद्ये

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

सं०नि० द्रेष्काणेशेनसंयुक्तायेसौम्यग्रहास्तेन तेषांसौहृदाद्ये पृष्टस्यजातस्यवा तदा सहजैर्भ्रात्रादिभिः प्रीतिसुखाद्यंवाच्यम् ॥ ३ ॥ अथत सटी०
॥१०६॥ त्सहजानांपुंस्त्वस्त्रीत्वादिज्ञानायाह चेत्पुंग्रहाइति तेद्रेष्काणेशयुक्ताः शुभग्रहाः पुमांसश्चेत् तदा सहजा भ्रातरः चेत्स्त्रीग्रहास्तदा सं० ९
सहजाभगिन्यः स्युः प्रकारांतरेणतद्विभागपूर्वकविशेषमाह अथवेति पुमंगं प्रश्नलग्नं जन्मलग्नं वापुरुषसंज्ञंचेत् लग्नेशद्रेष्काणे
शयोः स्नेहेति भ्रातरस्तत्सुखंच वाच्यं तद्भेदे स्त्रीसंज्ञंचेदित्यर्थः तदाभगिन्यस्तत्सुखंच अथ तदीशे द्रेष्काणेशे अरिमृतौ षष्ठाष्टमे

चेत्पुंग्रहास्ते सहजा भगिन्यःस्युःस्त्रीग्रहाश्चेदथवा पुमंगम् ॥ चेद्भ्रातृसौख्यं भगिनीसुखं तद्भेदेस्वघातोऽरिमृ
तौ तदीशे ॥ ४ ॥ त्र्यंशपोऽरिमृतिगोशुभयुक्चेन्मृत्युमेति सदृषत्तरुपातैः ॥ बंधुवैरमसदिंदुयुतश्चेद्रोमशः
श्रवणपृष्ठगदीना ॥ ५ ॥

स्ते सति स्वघातः स्वतएव स्वोच्छेदादिरिति ॥ ४ ॥ अथद्रेष्काणेशस्य षष्ठाष्टमस्थत्वे पापग्रहयोगे फलमाह त्र्यंशपइतिषष्ठाष्टमस्थो
द्रेष्काणेशः पुनः पापग्रहेणापि युतश्चेत् तदा सपुरुषः दृषदां दृषद्भ्यो वा तरूणां तरुभ्यो वा पातैर्मृत्युमेति प्राप्नोति यदि दैवान्मृत्यु
र्नस्यात् तदाबंधुवैरं बंधुभिस्त्यक्तो मृतसदृश एवेति पुनर्यदि षष्ठाष्टमस्थत्वं विनाद्रेष्काणेशः केवलमसदिंदुयुतः पापैश्चंद्रेणचयुतः ॥१०६॥
अथवा क्षीणचंद्रेणैव युतस्तदा स ना नरः रोमशः बहुरोमवान् तथा श्रवणपृष्ठगदी श्रवणयोः पृष्ठेच गदी रोगवान् वक्तव्यः ॥ ६ ॥

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

त्र्यंशेशस्याष्टमस्थत्वे तस्यपापग्रहविशेषयोगे फलविशेषमाह चेदर्कभौमाविति यदि अष्टमस्थावर्कभौमौ तदाढ्यौ द्रेष्काणस्वा मियुक्तौ तदा तस्य प्रष्टुर्जातस्य वा विद्युतः विद्युत्पातादितः अथवाऽऽतपात्तत्प्रयुक्तदाहादितः मृतिं मरणं वदेत् दैवज्ञः तथाद्रेष्काणे शोऽष्टमगे गुरुभ्यां जीवशुक्राभ्यांयुक्ते सति विषादितः विषभक्षणादितः अत्र विषादिति पंचम्याः प्रयोजकत्वार्थकत्वात् स्वतः परतो वा विषभक्षणादिना मृतिर्ज्ञेया द्रेष्काणेशेऽरिगेषष्ठगेतुकरे हस्ते अंकोपिवाच्यः तत्र सदसद्योगे शुभाशुभचिह्नमित्यपिबोध्यम् ॥ ६ ॥

चेदर्कभौमौ मृतिगौ तदाढ्यौमृतिं वदेद्विद्युतआतपाद्वा ॥ विषान्मृतिःस्यान्मृतिगेगुरुभ्यांयुतेऽरिगेत्र्यंशप तौकरेंकः ॥ ६ ॥ तत्तद्द्रेष्काणगाःपापास्तथैवफलदामताः ॥ द्वाविंशोङ्गा द्दकाणेतुतद्ग्रहादिवशाच्युतिः ॥ ७ ॥

एतल्लग्नद्रेष्काणोक्तन्यायेनान्येषामपि कुटुंबभ्रात्रादिभावगतद्रेष्काणतदीशानां फलं तद्वदेववक्तव्यमित्यतिदिशति तत्त दिति भ्रातृपितृमातृस्त्रीपुत्रादिभावगतवर्त्तमानद्रेष्काणेष्वपि स्थिताः पापास्तथैव पापग्रहयोगेपि द्रेष्काणानामसत्फलकत्वं सपापतदीशवदित्यर्थः कुटुंबादिद्रेष्काणेशानां पापयोगेऽष्टमादिस्थत्वेच लग्नद्रेष्काणेशवत्तन्मरणादिकमित्यपितद्वदेव बोध्यम् अष्टमभावगतवर्त्तमानद्रेष्काणे विशेषमाह द्वाविंशइति अंगात् लग्नात् लक्षणया लग्नगतवर्त्तमानद्रेष्काणादित्यर्थः

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

द्वाविंशे अष्टमभावगतवर्त्तमानद्रेष्काणे तद्ग्रहादिवशात् यादृशः शुभोऽशुभोवा तद्वशात् पूर्वं लग्नद्रेष्काणादिविचारेणोक्तरीत्या मृत्युयोगे निश्चिते सत्येव द्वाविंशद्रेष्काणे शुभाशुभग्रहसंबंधवशान्मृत्यौ शुभाऽशुभत्वमवसेयं नतु मृत्युरप्यतएवेत्यर्थः च्युतिरेतल्लोकाच्च्यवनं मरणमिति यावत् ॥ ७ ॥द्रेष्काणफलमभिधाय सप्तांशलग्नफलमाह सप्तांशलग्नेइति सप्तांशपास्त्वजगृहे तदीशाद्युग्मे ग्रहे सप्तमराशिपात्त्विति अस्यार्थः ओजराशौ लग्ने वर्त्तमानसप्तांशपस्तदीशात् मेषवृषादिराशिक्रमेण सप्तांशान्विगणय्य य आगतो राशिस्तदीशएव सप्तांशेशः यथामेषे दशस्वंशेष्वतीतेषुबुधः सप्तांशेशः युग्मेराशौलग्ने तत्सप्तमराशिपात्

सप्तांशलग्ने विषमे शुभानां योगेक्षणादौ पुमपत्यसौख्यम् ॥
समे सुतासंकलितोथतत्रासौम्यैरसंभूतिमुशन्ति सन्तः ॥ ८ ॥

यथावृषे वृश्चिकात् पूर्ववद्दशस्वंशेषुशनिः सप्तांशेशइति तस्मिन् विषमे सप्तांशलग्ने शुभयोगेक्षणादौ पुमपत्यसुखं समेतुकन्याप्रजः तत्रासौम्यैः पापैस्तु पुत्रादेरसंभूतिमाहुः केचित्तु सप्तांशलग्नात्त्रितीयेशः पापः पापयुतदृष्टश्चेत्तदा सहजोच्छेदः शुभः शुभयुतदृष्टश्चेत्तदा वृद्धिः यवनजातकादौ शरीराकारादिकमपि सप्तांशतो दर्शितं तत्रैव तदीशग्रहगुणोक्त्या शूरः प्रचंडः स्थिररसभ्यकर्मा सप्तांशकेर्कस्य बली प्रसिद्धः ॥ शुचिर्मुहुर्धर्मपरोविनीतो रतिप्रियः स्याच्छशिनः सुधीश्च १ दुर्मर्षणः सत्त्वबलाभिमानी स्यात्सप्तभागे क्षितिनंदनस्य ॥ कविः कथाशिल्पकलाभिरामो विद्वान् सुवाग्मी निपुणो बुधस्य २ विशारदः स्यात्स्थिर सत्त्व



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

बुद्धिगुरोर्मतो ज्ञानवतां वरिष्ठः ॥ कामी विलासी रतिहास्यलीलागांधर्वगीताभिरतिर्भृगोः स्यात् ३ मूर्खोलसो जिह्ममति विकर्मा सौरस्य पापाभिरतो नरःस्यात् ॥ स्वक्षेत्रनीचोच्चविधानि यानि ज्ञेयानिचैषांतु फलानि तानि ४ इति ॥ ८ ॥ तत्र नवांशस्यापि फलविशेषमाह नवांशनाथे इति नवांशेशे स्वनवांशगे स्वभोच्चहोरात्र्यंशादिगेवा शुभदृष्ट्युक्तेऽशुभसंबंधरहिते प्रश्नादौ पुरुषः रामां स्त्रियम् अतुलामनल्पगुणामुत्तमस्वभावामतिसुंदरीं विनाश्रममवश्यं लभते इत्यर्थः ॥ ९ ॥ तस्यकदा

नवांशनाथे स्वलवे स्वभादौ शुभेक्षिताढ्येऽशुभयोगहीने ॥ प्राप्नोति रामामतुलामवश्यंनरोविनायासम पापरूपाम् ॥ ९ ॥ केंद्रे तदीशेऽष्टिसमांतरिष्टे त्रिकोणगेतत्त्वमितेविवाहः ॥ नवांशलग्नेखलखेटयुक्तेजायाल वे वा नविवाहसौख्यम् ॥ १० ॥ अर्कांशपेंगेपितृतुल्यभाग्यस्त्रिकस्थितेनात्मसुखं न पित्रोः ॥ लाभस्थिते तातधनं सुगुप्तं नीचास्तपापारिखलेष्वभद्रम् ॥ ११ ॥

विवाहोभावीतिजिज्ञासायामाह केंद्रेइति तदीशेनवांशेशे इष्टेशुभ इष्टबलवतिसाधिकारेकेंद्रेसति अष्टिसमांतः षोडशवर्षा भ्यंतरेविवाहः त्रिकोणगेसतितत्त्वमिते पंचविंशतिवर्षाभ्यंतरे विवाहसुखाभावयोगमाह नवांशेतिमवांशलग्ने पापग्रहयोगादौ तथाजा यालवे वर्त्तमानसप्तमभावगतनवांशे वा पापयोगादौ वा विवाहसौख्यंस्त्रीसुखंनवक्तव्यमिति ॥ १० ॥ द्वादशांशेशफलमाह अर्कांश पेइति वर्त्तमानलग्नद्वादशांशेशे लग्नगतेसति प्रष्टा जातोवा पितृतुल्यभाग्योवक्तव्यः तस्मिन् त्रिकस्थिते षष्ठाष्टमद्वादशगतेसति

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

स्वशरीसुखं पित्रोरपिसुखं च नभवतीतिवाच्यं लाभभावगतेसतितुतस्मिन् तत्तातस्यधनं :सुगुप्तमस्ति :तस्यभोक्तासाविति भावः तथातस्मिन् द्वादशांशनाथे नीचगते अस्तेलुप्तकिरणे पापेच अरौ लग्नेशशत्रौ तथा खले क्रूरग्रहदृष्टियोगादिनाविजितत्वा दिनाचदूषिते नीचत्वादिदोषैर्दुष्टेसतीत्यर्थः अभद्रं पृच्छकस्यजातस्य वा तत्रतस्यसर्वथा हानिक्लेशादिकंवाच्यमिति नीचत्वादिधर्मा णांबहुत्वाद्बहुवचनं धर्मधर्मिणोस्तादात्म्यात् अथवा तत्रद्वादशांशलग्ने नीचास्तपापारिखलेषुसत्सु अभद्रंवाच्यं यद्वाद्वादशांशेशे नीचास्तपापारिखलेषुमध्येदुष्टत्वेनप्रधाने तस्मिन् निर्द्धारणार्थत्वात्सप्तमीबहुत्वस्येति ॥ ११ ॥ त्रिंशांशेशफलमाह त्रिंशांशपइति

त्रिंशांशपोसौम्यखगोस्तनीचोयदातदाबंधुभिराशुवैरम् ॥ त्रिकस्थितश्चेन्नृपभीतिभाक्स्यात् सदन्वितःस न्यदिसौख्यशाली ॥ १२ ॥ शक्तिरात्मप्रभावेष्टपित्र्यादिकं चित्तबुद्धिप्रसादप्रसूकादिकम् ॥ भ्रातृसत्त्वं गुणं भूसुखं चिन्तयेद्बुद्धिवाग्धर्म्मविज्ञानसत्सम्भवम् ॥ १३ ॥

वर्तमानात्रिंशांशनाथः पापग्रहश्चेत् अस्तःलुप्तकिरणश्चनीचगतश्चभवेत्तदातस्यबंधुभिः पित्रादिभिराशु जन्मदिनैवअकारणमेव वैरंविरोधोनिर्देश्यः यदित्रिंशांशेशः षष्ठाष्टमद्वादशगः तदासौपुरुषः नृपभीतिभाक् राजभयं प्राप्नुयात् यदिसएवात्रिंशांशपःसदन्वि तः शुभग्रहयुक्तइष्टः स्वयंचशुभः तदासौख्यशाली सर्वथासुखवान्स्यादिति ॥ १२ ॥ अथसूर्यादिग्रहाणांबलशालित्वादिसत्त्वे प्रत्येकंफलमाहद्वाभ्यां शक्तिरिति सूर्येबलिनि शुभस्वगृहादिगेसति जातस्य शक्तिः सर्वत्रसामर्थ्यम् आत्मप्रभावः प्रतिष्ठासौमन



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

स्यतेजस्वित्वादिरूपः इष्टपित्र्यादिकम् इष्टं सत्क्रियामित्रवर्गसुखादिच पित्र्यं पितृवर्गादिप्रयुक्तं परंपरयाप्राशस्त्यंधना
दिच चंद्रे तथाविधे चित्तस्यबुद्धेश्चप्रसादं स्वच्छत्वादिरूपं लुप्तस्मृतित्वाभावः सर्वत्रसंशयराहित्यंचतयोः फलं प्रसूका
दिकं मातृसुखादिकंच भौमेतथाविधे भ्रातॄणांसत्त्वं सभ्रातृकत्वं तेषां विक्रमादिशालित्वंवा गुणं विक्रमधैर्यौदार्यादिरूपं भूसुखं
पृथ्वीगृहारामादिसुखं चिंतयेत् तद्बलानुसारेणतत्सत्त्वासत्त्वादि विचारयेत् बुधे तथाविधे सति बुद्धिबलं वाक् वक्तृत्वं धर्मो
यागादिः श्रेष्ठं पुण्यप्रशस्तादि कर्मवा विज्ञानं शास्त्रीयं स्वानुभवोवा सतः समीचीनस्यकर्मणः संभवंचचिंतयेत् ॥ १३ ॥

क्षेत्रार्थाम्बरदेहपुष्टिसुतकीर्त्त्यश्वादिसंपत्सुखं वेश्यास्त्रीजनशुक्रवाहनरतस्थानोपयामात्मनः ॥
आयुर्जीवनसाधनक्षयशुचोदुःखं चबुद्ध्याबुधः सूर्याद्यैर्बलिभिःशनेरितरथोक्तश्लोकपादक्रमात् ॥ १४ ॥

गुरौतथाविधे क्षेत्रमितिक्षेत्रं धान्याद्युत्पत्तिस्थानम् अर्थः पुरुषार्थचतुष्टयं तदन्यतमंवा प्रयोजनंवा अंबराणि वस्त्राणि देहपुष्टिः तदु
चितकार्यक्षमता सुताः पुत्राः कीर्तिः यशः ख्यातिर्वा अश्वादयः आदिपदात्गवाद्याः गजादियानानिच एतेषां संपदः सत्त्वस्यसुखं
वाच्यं यद्वा संपत्सुखंकोशसंपत्त्यादिसुखं शुक्रे तथाविधे वेश्यातत्संगादावभिरुचिः स्त्रीजनः तत्रसत्त्वासत्त्वे प्रीतिर्वा शुक्रंवीर्यं
तत्रप्रजोत्पादनक्षमत्वाद्यं वाहनानि शिबिकाश्वादीनि रतस्थानं क्रीडासुरतादिसंबंधि उपयामो विवाहादिः स्वीकारोवा आ
त्माचित्तम् एतान् शनौतथाविधे आयुः स्थूलदेहसंबंधः जीवनसाधनं जीविकोपायः क्षयः प्रसिद्धः शुचः शोकादीन् दुःखंच बुधः पंडि

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

तःस्वबुद्ध्या तत्तद्ग्रहानुसारेण पूर्वोक्तंसर्वं तर्कादिना विचार्य फलंग्रहाणां प्रतिश्लोकपादमुक्तं समयादिनाब्रूयात् निर्दिशेत् अत्र विशेषमाह सूर्याद्यैरिति सूर्याद्यैः षड्भिस्तुबलवद्भिः सद्भिरुक्तंफलंनिर्दिशेत् शनेस्तु इतरथा निर्बलत्वे शुभत्वं बलाधिक्येतु नसत्त्वं अत्रेदंतत्त्वं स्थानहानिकरोजीवः स्थानवृद्धिकरः शनिरितिवचनादपि यत्स्थानस्वामीभूत्वागुरुर्दुःस्थानगोनीचमूढारिस्थोवाभवेत् तस्यस्थानस्यहानिकरः शनिस्तुयत्स्थानस्वामीभूत्वाताद्दशः स्यात् तत्स्थानस्यवृद्धिकरोवानवा हानिकरस्तुनास्ति सर्वथा सर्वत्रदुर्बलस्यैवशनेरिष्टत्वे राहुदोषं बुधोहन्यादुभयोस्तुशनैश्चरइत्याद्यनेकवचनविरोधः स्यात् पंचताराग्रहप्रयुक्तमहापुरुषयोग विशेषस्यासत्त्वापत्तिश्च सभानुरिंदुः शशिजश्चतुर्थेगुरुः सुतेभूमिसुतः कुटुंबे ॥ भृगुः सपत्नेरविजः कलत्रेविलग्नतस्तेविफलाभवंती त्यत्रमारकस्थशनेरिष्टत्वेविफलत्वोक्तिविरोधश्चेति अत्रमूले तत्तत्फलावध्युपक्रमादिव्यवस्थापकपदाभावेप्युक्तश्लोकपादक्रमेणैव सू र्यादिफलावध्युपक्रमादिव्यवस्थाऽवधेयेति शक्त्यादिकारकाणां चिंताकारकत्वेनापिव्यवहारः तथाहि सूर्यादात्मपितृस्वभाव निरुजः शक्तिश्रियौचिंतयेत् चेतोबुद्धिनृपप्रसादजननीसंपत्करश्चंद्रमाः ॥ सत्त्वंरोगगुणानुजावनिसुतान् ज्ञातिंधरासूनुनाविद्याबंधु विवेकमातुलसुहृद्वाक्कर्मकृद्बोधनः १ प्रज्ञावित्तशरीरपुष्टितनयज्ञानानिवागीश्वरात्पत्नीवाहनभूषणानि मदनव्यापारसौख्यंभृगोः ॥ आयुर्जीवनमृत्युकारणविपत्संपत्प्रदाताशनिः सर्पेणैवपितामहंतुशिखिनामातामहंचिंतयेदिति २ अत्रचरकारकाः प्रागुक्ताः स्थिर कारकास्तुद्युमणिरमरमंत्रीभूसुतःसोमसौम्यौगुरुर्दिनतनयारौभार्गवोभानुपुत्रः ॥ दिनकरदितिजेड्यौजीवभानुज्ञमंदाः सुरगुरुरिनसूनुः



CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

कारकाः स्युर्विलग्नादितिशम् ॥ १४ ॥ अथैतन्निबंधकर्त्तास्मरणात्मकमंगलाचरणव्याजेनस्वकीयज्ञातिं विबुधात्मतयाकुलपुरुषांश्चवर्ण यति गंगार्हेति गंगावत्पावनत्वेन अर्हा श्रेष्ठाउत्तमायाज्ञातिः गंगार्हेतिसंकेतप्रसिद्धा सैवसमुद्रोऽनंतत्वात् तत्रजन्मयस्य सज्ज्ञातेः समु द्रोपमया तत्रजातस्यचंद्रसादृश्यमर्थसिद्धम् एतदेवस्पष्टयति द्विजाधिराजइति द्विजराजः शशधरइतिकोशात् सतीरामनामकः सुधीः समुद्रवदनंतायामगाधायां गंगार्हेतिसत्संकेतसिद्धायां ज्ञातौ विप्रराजइवप्रादुरासीत् येन यथाशुक्लेनूतनउदितश्चंद्रः सर्वत्रशिष्टैर्वंद्यो

गंगार्हसज्ज्ञातिसमुद्रजन्मा द्विजाधिराजो द्विजराजमानः ॥
जनाभिजातप्रतिपूजितांघ्रिरासीत्सतीरामइति प्रसिद्धः ॥ १५ ॥

भवति तथासोपि विद्वज्जनवंद्योभवदिति ध्वनितम् अत्र द्विजराजपदेनमुद्रालंकारोपिसूचितः द्विजेषुसंस्कृतेषु ब्राह्मणेषूत्तमः श्रद्धया श्रुतिस्मृत्युदितसदाचारशीलत्वात् अतएव द्विजराजमानः द्विजेषुराजत इति तदानींतत्रेतरेषांद्विजानांस्वस्वव्यवहारादावपितदा ज्ञामनुल्लंघ्यैवप्रवर्त्तमानत्वात् एतदेवविशेषणमुखेनाह जनाभिजातेति जनेषुये अभिजाताः प्रधानास्तैः प्रतिपूजितावंघ्रीचरणौ यस्य ईदृशः प्रसिद्धोमुनिरिवासीत् ॥ १५ ॥

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

तत्पुत्रपौत्रावपितथाभूतौ नामतो निर्दिशति ज्योतीरायइति तत्पुत्रः श्रीसतीरामपुत्रः महान् सद्गुणैरुत्कृष्ट आत्मायस्य विशे
षणेनैतत्सूचयति विद्वदिति विद्वद्वृंदात्तस्मिन् वा अवाते कीर्तिप्रतिष्ठे येन तत्पुत्रः श्रीज्योतीरायस्य पुत्रः श्रीमत्कृपाराम
नाम श्रीमद्भिरपि पूजार्हः धीराणां विदुषामपि संदेहंभेदितुमुच्छेदितुं शीलमस्येति धीरसंदेहभेदी ॥ १६ ॥ तत्पुत्रमपि तथा गुणव
त्तया प्रसिद्धं नामतो निर्दिशति तदात्मजइति तंत्राणि शास्त्राणि तत्सिद्धांतावा तेषांसरणिः पद्धतिः तत्संबंधि गहनत्वादरण्यमिव

ज्योतीरायस्तत्सुतोभून्महात्माविद्वद्वृंदावाप्तकीर्तिप्रतिष्ठः ॥ तत्पुत्रःश्रीमत्कृपारामनामाश्रीमत्पूज्योधीरसं
देहभेदी ॥ १६ ॥ तदात्मजस्तन्त्रसरण्यरण्यसंचारपञ्चाननचारुमूर्त्तिः ॥ समुन्मनाजस्पतिमिश्रशर्म्माश्री
साम्बशर्वानुगतान्तरात्मा ॥ १७ ॥

दुरधिगमं तत्रसंचारे पंचाननवच्चारुमूर्तिः निर्भयमूर्त्तिः समुन्मनाः सम्यक् सत्कर्मणि उत्कंठितं मनोयस्य ईदृशः श्रीजस्पति
मिश्रः प्रसिद्धः शर्मांतं नाम विप्रस्य वर्मांतं क्षत्रियस्यत्विति स्मृतेः शर्मशब्दस्य ब्राह्मण्यसूचकत्वात् ईदृशप्रभावबीजंदर्शयति ॥११०॥
श्रीसांबशर्वानुगतांतरात्मेति श्रीसाम्बे श्रीदुर्गयाऽम्बिकया परमेश्वर्या सहिते शर्वे श्रीभगवति परमेश्वरे शक्तिशालिवामभागे

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

अनुगतः समाहित आत्मा चित्तं यस्येत्यर्थः ॥ १७ ॥ तस्यश्रीजस्पतिमिश्रशर्मणश्चत्वारस्तनयास्तेभ्योपि विशेषनयादिवि
शिष्टाउदपद्यन्तेत्याह सोभूदिति सः श्रीजस्पतिमिश्रशर्माअंबुधिः समुद्रो भूमिमिव चतुर्दिशं सर्वतः लोकान्संव्याप्य चतुर्भिरुरो
जातैरौरसैः पुत्रैरितियावत् चतुर्मूर्तिः वासुदेवसंकर्षणप्रद्युम्नानिरुद्धवच्चतस्रो मूर्त्तय आकारविशेषायस्य भगवानिवयशसादि
शांव्यापनार्थं प्रतिदिशमेकैकां मूर्तिंधृतवानित्यर्थः तादृशपुत्ररूपेण चतुर्धा प्रादुर्भावे प्रयोजनमाह द्यामिति सुरलोकोद्यो दिवौद्वे
स्त्रियामितिकोशाद्द्यां स्वर्गं यशसाद्वारेण अधिरोढुंप्राप्तुं तपः क्रियायशोविशेषादिभिरेव स्वर्गप्राप्तेः श्रवणात् चतुर्मूर्तिरभूदित्युक्ता

सोभूदम्बुधिवच्चतुर्दिशमुरोजातैश्चतुर्भिश्चतुर्मूर्त्तिर्द्यां यशसाधिरोढुमिहचाद्योऽमीरचंद्रःपुरा ॥ स्वर्यातःस्व
महोनिधायसहजेऽस्मादन्वभूत्तारितानेकज्ञोत्रवजीरचंद्रइति यःख्यात्याद्वितीयोप्यसः ॥ १८ ॥

सुचतसृषु मूर्तिषु मध्ये प्रथमामूर्त्तिस्तातस्य सुखावासाय स्वर्गेऽनुकुलसामग्रीं संपादयितुं पितुः प्रागेव स्वर्गंगत इत्याह अद्यइति
पुरा पितुः प्रागेव स्वकीयं तेजः सामर्थ्यं स्वानुजे निधाय स्वर्यात इत्यन्वयः। स्वानुजे सहजे श्रीवजीरचंद्राख्ये निधाय पितृशुश्रूषार्थं
स्वर्यातः स्वर्गंगतः अमीरचंद्रनामक इतिशेषः यस्मिंस्तेजोनिहितं तन्नामनिर्दिशति अस्मादन्वभूदित्यादिना अस्मादनु कनिष्ठः
श्रीवजीरचंद्र इतिख्यात्या प्रसिद्ध्या नाम्नावा अभूत् एतन्नामक उदपद्य ख्यात्येतिपदंकाकाक्षिगोलकन्यायेनोभयान्वयियःख्यात्या
प्रसिद्ध्या क्रमगणनया द्वितीयोपि असः गुणैरद्वितीयः वस्तुतः नसः असः नञ्सूत्रेण तत्पुरुषसमासः ततो नलोपोनञइति नलोपे

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

रूपम् अत्रोत्तरपदस्य प्रधान्यात् लक्षणयातच्छब्दस्य सद्वितीयपरामर्शकतया प्रकृते आरोपितः सद्वितीयइतिबोधे अर्थात्सद्वितीय
भिन्नेऽवसानम् अत्रहरिकारिका नञ्समासे चापरस्य प्राधान्यात्सर्वनामता आरोपितत्वं नञ्द्योत्यं नह्यसोप्यतिसर्ववदिति अभावोवान
ञर्थः अभावोवानञर्थोस्तु भाष्यस्यहि तदाशयादितिहर्युक्तेः विरोधितया द्वितीयाभाववानित्यर्थः यद्वानसः द्वितीयो यस्येति बहुव्री
हिस्तेनासः अद्वितीय इत्यर्थः अविद्यमानो द्वितीयोयस्येति वाबहुव्रीहिः नञोस्त्यर्थानांवाचोत्तरपदलोपइत्यनेनास्त्यर्थकविद्यमानप
दलोपे रूपं सर्वनाम्नांपूर्वपरामर्शित्वस्वाभाव्यात्तदोद्वितीयार्थकत्वाद्गुणैस्तदानीं तत्सदृशस्यान्यस्याभावात् द्वितीयत्वेप्यद्विती

अन्वस्मादभवद्धरिस्मृतिरतस्वान्तो मुसद्दीयुतो रामोऽस्मादनुसम्भवोऽमृतसरस्यावर्जितेशो वसन् ॥ सश्री
रामदयालुसञ्ज्ञकृतदृक्कूचक्रे विदग्रेसरः सत्सङ्केतनिधिंसतांनिधिमिवाद्रीन्द्वंकभूवत्सरे ॥ १९ ॥

यत्वमितिविरोधालंकारः द्वितीयभिन्नोद्वितीयसदृश इति पर्युदासाश्रवणंवायः तारिताः पारंप्रापिताः अनेकेज्ञा विद्वांसो येनस
इत्यर्थः ॥ १८ ॥ आद्ययोः क्रमेण नामनी निर्दिश्यशेषयोरपि दर्शयति अन्वस्मादिति अस्मात् श्रीवजीरचन्द्रादनु पश्चात मुसद्दी
युतोरामः मुसद्दीरामपदाभ्यां घटितमुसद्दिरामनामक इत्यर्थः अभवत् जातस्तृतीयः कीदृशः हरिस्मृतिरतस्वांतः श्रीपतिस्मरण
एवानवरतंरतं प्रीतिमत प्रीत्युत्फुल्लं स्वांतं हृदयं यस्य इदानीमेतन्निबंधकर्त्ता पूर्वनिर्दिष्टेषु चतुर्षुमध्ये स्वस्यैव चतुर्थत्वं ॥१११॥
स्पष्टयन्स्वनाम निर्देशपूर्वकं निबंधनामतन्निर्माणसमयंच कीर्त्तयति अनुसंभवइति अस्मात् श्रीमुसद्दिरामात् अनुपश्चात्तत्संभव

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

उत्पत्तिर्यस्य एवंभूतः श्रीरामदयालुसंज्ञः सत्संकेतनिधिं सतां प्रमाणसिद्धानां संकेतानां शुभाशुभसूचकप्राचीनविद्वत्संकेतसिद्धार्थप्रतिपादकवाक्यानां निधिमिव सत्संकेतसिद्धमहर्षिप्रणीतवाक्यार्थप्रकाशकमित्यर्थः संकेतेषु सत्त्वमव्यभिचारिफलप्रकाशकत्वप्राचीनाविरुद्धत्वादिरूपम् एतन्नामकं ग्रंथंचक्रे कृतवान् कीदृशः आवर्जितेशःआवर्जितः श्रद्धाभक्त्याद्यतिशयवत्तया आराधितः सेवित ईशोयेन अथवा आवर्जितेश इत्यत्र आराधितेश इत्येव पाठोयुक्तःस्पष्टार्थत्वादिति चिंतनीयम् पुनः कीदृशः ऋतदृक् ऋते सत्येब्रह्मणि दृक् स्वाभेदज्ञानंयस्य ब्रह्मसाक्षात्कारवानिति भावः यद्वा ऋता अबाध्या अदूष्या चित्तवृत्तिर्यस्य अथवा प्रवक्तृतायस्य मिथ्याभाषणरहिततया सदर्थकवाक्यप्रबंधादिकृदित्यर्थः अतएवविदग्रेसरः वित्सुविद्वत्सु मध्ये अग्रेसरः प्रतिष्ठित इत्यर्थः स्वजन्मनगरं विशेषणविधयोद्घाटयति अमृतसरसीति तन्नामकेनगरे उद्भूयवसन् अत्रावर्जितेशत्वऋतदृक्त्वाभ्यां विशेषणाभ्यां ग्रन्थनिर्माणसहायसामग्रीसंपत्तिर्योग्यताच कर्तुः सूचिता तेन प्रशस्तयोग्यकर्तृकत्वाद्ग्रन्थस्यापि प्रशस्यतयाऽध्ययनीयत्वसंपादनीयत्वादिकमप्यर्थसिद्धमुक्तं ग्रन्थे विशेषमुक्तार्थात्मकमुपमानेन व्यंजयति सतांनिधिमिवेति एतेन यथानिधिर्योग्येभ्य एव पुत्रशिष्यादिभ्यो दीयतेऽन्येभ्यश्च सएव गोपनीयस्तथायं ग्रंथोपि योग्येभ्योदेयोन्येभ्यश्च गोपनीय इति सूचितं ग्रन्थनिर्माणसमयं दर्शयति अद्रीन्दुंकभूवत्सरे श्रीविक्रमादित्यराज्यात्सप्तदशोत्तरैकोनविंशतिशततमे संवत्सरे इत्यर्थः ॥ १९ ॥

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

सं०नि०
॥११२॥

स्वविहितं प्रबंधं सत्सु धीरेषु समर्पयन् तान् प्रार्थयते इतरागुणगोपनेष्विति इह देशे समयेच संकेतनिधिनामको निबंधः यथामति मया निब
द्धः यस्मात् सत्सु विद्वत्सु तच्चरणारविंदेषु योग्यत्वात् मया समर्पितः सम्यग्विधानेनार्पितः अतो हेतोः विनयावनतेष्वेव निधेयः नवसंकेत
निधिः नवसंख्याका ये संकेताः एतद्ग्रन्थघटका ग्रन्थावयवास्ते एव महापद्मश्च पद्मश्च शंखो मकरकच्छपौ ॥ मुकुंदकुंद नीलखर्वा
इत्युक्ता नवनिधय इव वर्त्तंते यस्मिन् अतएव शुभप्रबन्धः आस्तिकप्रणीतत्वात् सत्फलबोधकत्वेन सर्वेषांसतांस्पृहणीयत्वाच्च प्रार्थ

इतरागुणगोपनेषु सत्सु प्रभुपादाब्जपरेष्विहार्पितो यत् ॥ विनयावनतेष्वतो निधेयो नवसंकेतनिधिः शुभप्र
बन्धः ॥ २० ॥ वजीरचन्द्रात्मजघासिरामकृतेहिसङ्केतनिधौकृतेस्मिन् ॥ ज्योतिर्विदारामदयालुनाम्नाग्रंथेन्त्य
सङ्केतइतःसुसिद्धिम् ॥ २१ ॥ इतिज्योतिर्विद्रामदयालुविनिर्मितेसंकेतनिधौनवमःसंकेतः ॥ समाप्तोयं ग्रंथः ॥

नाप्रयोजनं विद्वद्विशेषणेनस्पष्टयति इतरागुणगोपनेषुसत्सु इतरेषांपरेषां मादृशानांयेऽगुणाः गुणभिन्नाअपगुणाः मंदप्रज्ञत्वस्वश
क्तिमतिक्रम्यग्रन्थकरणादौ प्रवृत्तत्वाभिमानित्वदंभित्वाप्रशांतत्वादयस्तेषांयद्गोपनं स्वेनास्फुटीकरणं तच्छीलेषु सत्स्वित्यर्थःअत्र
हेतुः प्रभुपादाब्जपरेष्विति भगवच्चरणारविंदानवरताराधनैकाग्रांतःकरणेषु सदुपकरणशीलेषु महात्मस्वित्यर्थः स्पष्टमन्यत् ॥ २० ॥
अथग्रंथसमाप्तिं सूचयन्नंतिमसंकेतसमाप्तिमभिधत्तेवजीरचन्द्रात्मजेति यद्यपिपूर्वंसर्वत्रसंकेतसमाप्तिसूचकश्लोकेष्वा

सटी०
सं० ९
॥११२॥

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

रमनामगुरोनाम नामातिकृपणस्यच ॥ श्रेयस्कामोनगृह्णीयाज्ज्येष्ठापत्यकलत्रयोरितिस्मृतिमनुसृत्यायुक्तत्वाद्घटकतया ज्येष्ठस्य गुरोर्नाम्नउपपादनं नकृतंतथापिग्रंथसमाप्तावत्रतत्स्थाने संदेहनिवृत्त्यर्थं नाम्नोप्युपादानमुचितम् असंदेहस्यसर्वत्रमुख्ययोजनत्वात संदेहस्यचातिदोषत्वात् तस्य आत्मजः स्वभ्रातृजइत्यर्थः तस्यकृते एतच्छात्रीयव्युत्पत्तेरनायासेनसिद्ध्यर्थं कृते श्लोकश्च नयानिबद्धे संकेतनिधौ एतन्नामकेनिबंधे श्रीरामदयालुनाम्ना ज्योतिर्विदा ज्योतींषि ग्रहोपग्रहनक्षत्रतारादीनि तान्यनुसृत्य लोका नांयत्पूर्वजन्मसंपादितपुण्यापुण्यकर्मपरिपाकरूपसुखदुःखेष्टादिज्ञापकतयाप्रकाशकंशास्त्रमपितत्कालीनग्रहदृष्ट्यासंबंधपरंपराप्रयोज्यशु भाशुभव्यंजकत्वाज्ज्योतिःशब्दार्थः तच्छास्त्रंसदनुग्रहाद्वेत्तीतिवित् यद्वा ग्रहगणितादियथार्थज्ञानपूर्वकं स्वरूपतो ग्रहनक्षत्रादी निवत्तीतिवित् तेननिबद्धेऽस्मिन्ग्रंथे अन्यः संकेतः नवमः संकेतः सुसिद्धिं निर्विघ्नांसमाप्तिं इतःप्राप्तइत्यर्थः अत्रोपक्रमे तिश्रीशब्दस्यसमाप्तौ सिद्धिपदस्योपादानेनाध्यापकाध्येत्रादेरध्यापनादियोग्यतया श्रीसंपत्तिसिद्धिप्रयोजकताग्रंथस्यास्य समाहिते सिद्धम् ॥ २१ ॥ श्रीश्रीधीरवजीरचंद्रतनयश्रीघासिरामानुजोब्दे श्रीविक्रमभानुभूभृदुदयादङ्काब्धिगोभूमिते ॥ श्रीविद्यारामदयालु भिर्निजपितृव्यैर्निर्मितेटिप्पणींसत्सङ्केतनिधौयथामतिशुभार्थीरामदत्तोव्यधात् ॥ १ ॥ इतिश्रीरामदत्तकृता सं० नि० व्याख्या समाप्ता

---

इदं पुस्तकं क्षेमराज-श्रीकृष्णदासश्रेष्ठिना मुम्बय्यां स्वकीये "श्रीवेङ्कटेश्वर" स्टीम्-मुद्रणयन्त्रालयेमुद्रयित्वा प्रकाशितम् ।

चैत्र संवत् १९६८, शके १८३३.

CC-0 Shri Krishna Museum, Kurukshetra. Digitized by eGangotri

